# न हि जीवनं तत्

न यत्र देशोद्धृतिकामना स्यात्
न मातृभूमेर्हितचिन्तनं वा।
न राष्ट्ररक्षाबलिदानभावः
श्मशानतुल्यं न हि जीवनं तत्।।

"यत्र देशोद्धारः करणीयः इति भावना न भवति, यत्र च जनाः मातृभूमेः हितं न चिन्तयन्ति, यत्र राष्ट्ररक्षणार्थं बलिदानं न दृश्यते, तादृशः देशः देशः एव न, अपि तु श्मशानम्। तत्रत्यानां जीवनं जीवनं न, अपि तु श्मशानवासः" इति कश्चित् कविः स्वाभिप्रायं प्रकटयति।

अहं, मम परिवारः, मम बान्धवाः इति एतावतः एव चिन्तनं क्षुल्लकचिन्तनम्। आत्मनः, स्वपरिवारस्य, स्वबन्धुगणस्य च हितस्य चिन्तनेन सहैव समाजहितस्य अपि चिन्तनं करणीयम् अस्माभिः। समाजः प्रबलः सत्त्वयुतः च यदि स्यात् तर्हि व्यक्तयः अपि प्रबलाः सत्त्वयुताः च भवन्ति। समाजः एव शिथिलः तर्हि तत्र निवसतां जीवनव्यवस्था अपि शिथिला भवति। मात्स्यन्यायः विराजते तत्र! प्रबलाः दुष्टशक्तयः दुर्बलान् इतोऽपि दुर्बलीकुर्वत्यः निरङ्कुशं विराजन्ते।

स्वार्थचिन्तनम् एव यदा प्रबलः भवति तदा दुर्गुणाः स्वयं परिपुष्टाः भवन्ति। यः स्वार्थी भवति सः धनसम्पादनसमये मार्गामार्गं न चिन्तयति। उत्कोचग्रहणे चित्तसङ्कोचं न अनुभवति। कार्ये आलस्यं, कर्तव्यभ्रष्ठता, स्वजनपक्षपातः इत्यादयः दुर्गुणाः तस्मिन् आवहिताः भवन्ति। देशः, समाजः, त्यागः इत्यादीनां चिन्तनं दूरे एव तिष्ठति। एतादृशाः एव यत्र निवसन्ति स च देशः कः अन्यः ऋते श्मशानात्?

अस्माकं पुरतः कोऽपि उच्चः आदर्शः स्फुटतया स्यात्। जीवने किमपि लक्ष्यं स्यात्। लक्ष्यसाक्षात्कारार्थं समर्पणबुद्धिः अपि भवेत्। अन्यथा अस्माकम् अपि जीवनं 'जायन्ते च म्रियन्ते च बहवः क्षुद्रजन्तवः' इतिवत् निष्फलं भवति।

जिज्ञासा

# पूर्वपदस्य पुल्लिङ्गवत् रूपम्।

आचार्यः- वत्स, अत्र आगच्छतु। दीर्घमाला इत्यत्र कः समासः? विग्रहवाक्यं च कथम्?

शिष्यः- कर्मधारयसमासः ननु? दीर्घा चासौ माला इति विग्रहः।

आ - अत्र पूर्वपदं किम्?

शि - दीर्घा इति खलु? एषः तु सामान्यः विषयः।

आ - विग्रहवाक्ये पूर्वपदं दीर्घा इति। समस्तपदे तु दीर्घमाला इत्यत्र पूर्वपदं तु दीर्घ इति। एवं तर्हि विग्रहवाक्ये पूर्वपदे दीर्घा इत्यत्र स्थितः आकारः कुत्र गतः? कथं लुप्तः अभवत्? समासस्य सामान्यनियमानुगुणं पूर्वपदस्य विभक्तेः लोपः केवलं खलु भवति?

शि - सत्यं खलु! उत्तमलेखनी, श्वेतशाटिका, वक्ररेखा इत्यादिषु अपि एवमेव दृश्यते। अत्र किमपि विशेषविधानम् अस्ति वा?

आ - आम्, कर्मधारयसमासे पूर्वपदत्वेन स्थितं प्रातिपदिकं स्त्रीलिङ्गे विद्यमानं सत् यदि भाषितपुंस्कं भवति तदा तस्य पुल्लिङ्गवत् रूपं भवति।*

शि - प्रातिपदिकं नाम विभक्तिरहितं शब्दरूपं खलु? किन्तु आचार्य! भाषितपुंस्कं नाम किम्?

आ - यस्य शब्दस्य रूपं पुल्लिङ्गे स्त्रीलिङ्गे च भवति तस्य भाषितपुस्कम् इति नाम इति वक्तुं शक्यते सामान्यतः।

शि - दीर्घशब्दस्य पुल्लिङ्गे 'दीर्घ' इति रूपं, स्त्रीलिङ्गे च 'दीर्घा' इति रूपम्। अतः

---

* पुंवत्कर्मधारयजातीयदेशीयेषु - पाणिनिसूत्रम्।

तस्य भाषितपुंस्कत्वम्। तेन च दीर्घा + माला इत्यत्र 'दीर्घा' इति पूर्वपदस्थाने 'दीर्घ' इति पुल्लिङ्गरूपं तिष्ठति। तदा दीर्घमाला इति रूपम्।

आ - आम्। जीवन्ती चासौ भाषा च इत्यत्र समस्तं रूपं वदतु।

शि - ....। जीवन्तीभाषा इति समस्तरूपं न भवति इत्येतावदेव वक्तुं शक्नोमि। शुद्धरूपं तु न जानामि।

आ - तथा न भवति इति कथं ज्ञातवान्?

शि - यतः विशेषतः पृष्टम्, अतः अत्र कोऽपि विशेषः अस्ति इति अहं तर्कितवान्।

आ - अस्तु तावत्। जीवन्ती+भाषा इत्यत्र सोपानानि वदतु।

शि - जीवन्ती+भाषा ... I

जीवन्ती (प्रथमा=सु) + भाषा (प्रथमा=सु) ... II

जीवन्ती (प्रथमा=सु) + भाषा (प्रथमा=सु) ...III

आ - अत्र जीवन्ती इति तात्कालिकवर्तमानकालिकं शतृप्रत्ययान्तं रूपम्। एतस्य पुल्लिङ्गरूपं 'जीवत्' इति। (प्रथमाविभक्तौ एकवचने च 'जीवन्' इति।) स्त्रीलिङ्गे 'जीवन्ती' इति। अतः तस्य शब्दस्य भाषितपुंस्कत्वम्। तेन च पूर्वपदस्थस्य 'जीवन्ती' इत्यस्य स्थाने 'जीवत्' इति रूपं भवति।

शि - तदा 'जीवद्भाषा' इति रूपं सिध्यति।

आ - एवम् एव पतन्ती+माला = पतन्माला, क्रीडन्ती+बालिका = क्रीडद्बालिका, गच्छन्ती+महिला = गच्छन्महिला, खादन्ती+धेनुः = खादद्धेनुः इत्यादिषु अपि ज्ञेयम्।

शि - शतृप्रत्ययान्तं स्त्रीलिङ्गरूपं कर्मधारयसमासे यदा पूर्वपदरूपेण तिष्ठति तदा जागरूकता अपेक्षिता इति खलु कथनस्य आशयः?

आ - आं, तथैव।



# चन्दमामा

अक्टोबर्-१९८७

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. २-५०

वार्षिकं ग्राहकशुल्कं रू. ३०-००

# चन्दमामा

संस्थापकः- **'चक्रपाणिः'** सञ्चालकः- **'नागिरेड्डी'**

'सम्भाषणे दोषाः सहजाः। दोषकरणसोपानम् अतिक्रम्य एव कश्चित् शुद्धया भाषया वदेत्, अतः भाषाभ्यासी कश्चित् दोषान् करोति चेत् सोढव्यम्' इत्यत्र तु न कस्यचित् विमतिः। किन्तु केषाञ्चित् भ्रान्तिः अस्ति यत् ये दोषान् सहन्ते ते भाषां कलुषयन्ति इति। भाषाप्रचारस्य यत्नः आपाततः दृष्टः चेत् एषा भ्रान्तिः सहजतया उत्पद्यते एव।

वयं वदामः- "दोषाः जाताः वा? चिन्ता मास्तु, सम्भाषाणं करोतु" इति। 'पदे पदे दोषोद्घाटनेन न कोऽपि सम्भाषणं कर्तुम् उत्साहं प्रकटयति' इति वयं जानीमः। अतः एव उदारतां प्रकटयामः। एतस्य अर्थः 'कलुषितायाः भाषायाः एव प्रसारः करणीयः' इति सर्वथा नः। शुद्धतायाः विषये तु अस्माकं महान् आग्रहः प्रयत्नश्चापि अस्ति। दोषविषये यावतीम् उदारताम् अन्येषु प्रकटयामः तावतीम् एव कठोरतां शुद्धताविषये आत्मनि अपि प्रकटयामः वयम्।

ये दोषान् उद्घाटयन्ति ते अपि यदि मुखम् उद्घाटयेयुः तर्हि ततः अपि दोषाः निर्गच्छन्ति एव। विद्वत्ता दोषकरणे तारतम्यं कुर्यात्, किन्तु अनभ्यासः दोषान् जनयति एव। अतः एव दोषविषये उदारता, उदारतायाः स्पष्टावगतिः च भवतु इति वयं निवेदयामः

वयं दोषान् सहामहे, न तु कदापि अनुमन्यामहे।

सम्पुटः- ४ अक्टोबर्-८७ सञ्चिका-७

प्रतिकृतिमूल्यं रू. २-५० * वार्षिकं ग्राहकशुल्कं रू. ३०-००



रसप्रश्नाः

# श्रीरामस्य वनगमनम्

[ श्रीरामस्य वनगमनप्रसङ्गम् आधारीकृत्य अधः केचन प्रश्नाः सङ्गृहीताः। उत्तररूपेण विकल्पत्रयं सूचितम् अस्ति अपि। युक्तम् उत्तरं जानन्तु। ]

I श्रीरामस्य वनगमनसमये भरतः स्वमातुलगहे आसीत्। तस्य मातुलस्य नाम किम्?

(१) युयुधानः। (२) युधाजित्। (३) यौवनाश्वः।

II श्रीरामस्य पट्टाभिषेकः कस्मिन् मासे निश्चितः आसीत्?

(१) चैत्रमासे। (२) कार्तीकमासे। (३) आश्वयुजमासे।

III कैकेयी दशरथात् वरद्वयं यत् प्राप्तवती तत् कस्मिन् सन्दर्भे?

(१) शम्बरासुरवधसन्दर्भे। (२) देवदानवयुद्धसन्दर्भे। (३) शम्बूकवधसन्दर्भे।

IV वनं प्रस्थिताः रामः लक्ष्मणः सीता च प्रथमां रात्रिं कुत्र यापितवन्तः?

(१) गङ्गानदीतीरे। (२) तमसानदीतीरे। (३) सरयूनदीतीरे।

V वनं गच्छतः रामस्य सत्कारं कृतवान् गुहः कस्य राज्यस्य अधिपतिः?

(१) शृङ्गाटकपुरस्य। (२) शोणितपुरस्य। (३) शृङ्गबेरपुरस्य।

VI वनवासार्थं चित्रकूटप्रदेशः एव उचितः इति कः मुनिः सूचितवान्?

(१) भरद्वाजः। (२) विश्वामित्रः (३) गौतमः।

VII वनं प्रस्थितवतां रामादीनां रथवाहकः सुमन्त्रः कियत्पर्यन्तम् अनुसृतवान्?

(१) तमसापर्यन्तम्। (२) गङ्गानदीपर्यन्तम्। (३) चित्रकूटपर्यन्तम्।

उत्तराणि–

I-२. II-१ III-१. IV-२. V-३. VI-१. VII-२.

# रसवार्ताः

## उड्डयनसमर्थः धूमशकटः



वायौ गमनसमर्थः धूमशकटः जपानदेशे आविष्कृतः अस्ति। एतस्मिन् शकटे पक्षविशेषाः वा, 'प्रोफेल्लर्' सदृशानि यन्त्राणि वा न सन्ति। आयस्कान्तशक्त्या एषः चलति।

## अपूर्वः शोधः!

तमिळुविश्वविद्यालयीयाः जलान्तर्गत पुरातत्त्व विभागीयाः एषु दिनेषु मन्नार् जलसन्धौ एकं नौकावरोधकं कीलकम् अन्विष्टवन्तः। भारतीयाः नाविकाः ३००० वर्षेभ्यः पूर्वमेव एकटन्भारयुतस्य एतस्य कीलकस्य उपयोगं कुर्वन्तः आसन् इति ते अभिप्रयन्ति।





## अज्ञातमूलाः शरावाकारकाः उपग्रहाः

चैनादेशे सेण्ट्रल् ष्व्युयल् प्रान्ते विंशतिः जनाः नीलाकाशे उड्डयमानं वर्णमयं शरावाकारकम् उपग्रहं चत्वारिंशत् निमेषान् यावत् दृष्टवन्तः। अपूर्वम् एतत् दृश्यं दृष्ट्वा ते आश्चर्यचकिताः।

## दुर्गे सुवर्णनाणकानि!

तिरुपतिसमीपस्थे चन्द्रगिरिदुर्गे द्वादशवर्षीयः कश्चन बालकः भूमिं खनन् आसीत्। तदा सः सुवर्णनाणकैः पूर्णम् एकं पात्रं प्राप्तवान्। एतां वार्तां सः आरक्षकान् उक्तवान्। एतानि नाणकानि विजयनगरराजकालीनानि इति परिशीलनेन ज्ञातानि।



# कन्थः

कण्वमुनेः कुमारः कन्थः गोमतीनदीतीरे तपः आचरितुम् आरब्धवान्। कठोरे तपसि लीनस्य कन्थस्य तपोभङ्गार्थं इन्द्रः प्रम्लोचनानामिकाम् अप्सरसं प्रेषितवान्। प्रम्लोचना गोमतीतीरम् आगतवती। हावभावैः, सौन्दर्येण, विविधनृत्यैः च कन्थस्य मनसि चाञ्चल्यम् उत्पादितवती। कन्थः तस्याः अपूर्वसौन्दर्येण आकृष्टः सन् तां परिणीतवान्।

दिनानि, मासाः, वर्षाणि च अतीतानि। कन्थः प्रम्लोचनायाः साहचर्यसुखम् अनुभवन् ऐहिकभोगेषु अनुरक्तः सन् नित्यजपं तपःकार्यं च सर्वथा विस्मृतवान्।

एकदा सायङ्काले पर्वतस्य उपरि उपविष्टः कन्थः सूर्यास्तं निर्निमेषदृष्ट्या पश्यन् आसीत्। तदा सः अकस्मात् 'सायं सन्ध्यावन्दनस्य एषः कालः' इति स्मृतवान्। झटिति उत्थाय ध्यानार्थम् उपवेष्टुं मृगचर्मणः अन्वेषणे रतः अभवत्। तत्समये तत्र आगता प्रम्लोचना किलकिलेति हसितवती।

तस्याः हासं श्रुत्वा कन्थः आश्चर्येण- "किमर्थं तथा हससि?" इति तां पृष्टवान्।

"किम् अन्यत् करोमि? शताधिकवर्षाणाम् अनन्तरं भवान् ध्यानं स्मरन् अस्ति किल!" इति उक्त्वा पुनः हसितवती सा।

"शताधिकसंवत्सराः अतीताः!" इति आश्चर्येण उद्गारं प्रकटितवान् कन्थः।

"आं, आवयोः विवाहानन्तरं षडुत्तरशतं (१०६) संवत्सराः अतीताः। मासद्वयं चापि अतीतम्" इति हसन्ती उक्तवती प्रम्लोचना।

"एवं वा?" इति वदन् कन्थः लज्जया शिरः अवनमय्य, 'वृथा कालः यापितः' इति पश्चात्तापम् अनुभवन् ततः प्रशान्तं स्थलं गत्वा ध्यानार्थम् उपविष्टवान्। अनन्तरं तस्य तपः निर्विघ्नं प्रवृत्तम्। अचिरात् एव सः तपःसिद्धिं प्राप्तवान्।





# राजदर्शनम्

रामगिरिनामके ग्रामे श्रीपालः नाम कश्चित् आसीत्। श्रीः तस्य नाम्नि केवलम् आसीत्, न तु जीवने। जन्मना दरिद्रः सः अन्येषां गृहे कार्यं करोति। तैः दत्तेन धनेन उदरं पूरयन् कथञ्चित् जीवनं यापयति च। कदाचित् पूर्णोदरं भोजनम्। पुनः कदाचित् निर्जलम् उपवासः।

एकदा तद्ग्रामीणः शिवः नाम कलाकारः राजधानीं गत्वा स्वविद्याप्रौढतां प्रदर्श्य प्रत्यागतवान्। सामान्यजनरूपेण गतः सः राजधानीतः प्रत्यागमनसमये धनिकः जातः आसीत्।

एतत् दृष्टवतः श्रीपालस्य अत्याश्चर्यम्। सः शिवस्य गृहं गत्वा पृष्टवान् एव- "भवान् राजधानीं गत्वा महत् ऐश्वर्यं सम्पाद्य आगतवान् खलु? राजधान्यां तादृशः कः विशेषः?" इति।

तदा शिवः सन्तोषं प्रकटयन् उक्तवान्- "अस्माकं महाराजस्य विषये किमिति वदामि? सः साक्षात् अवतारी पुरुषः। शौर्येण अर्जुनः चेत् ऐश्वर्येण कुबेरः एव।दानगुणेन शिबि-बलि-कर्णादीन् अतिशेते। महाराजस्य अन्यः विशेषगुणः नाम सः प्रजानां हितम् एव सदा चिन्तयति। प्रजाः पुत्रवात्सल्येन पश्यति च:" इति।

अल्पेषु एव दिनेषु शिवस्य आर्थिकपरिस्थितिम् एव परिवर्तितवतः महाराजस्य विषये यत् एतत् श्रुतं तत्सर्वं सत्यम् एव इति अङ्गीकृतवान् श्रीपालः। महाराजविषये' कुतूहलम् उत्पन्नं तस्य मनसि। अतः सः एतद्विषये इतरान् अपि पृष्टवान्। तेन सः राजविषये बहून् विषयान् ज्ञातवान्।

'राजा प्रजाहितार्थं बहूनि उत्तमानि कार्याणि करोति। यत्र फलसमृद्धिः न्यूना तत्र



करभारः अपि न अधिकः। यत्र क्षामः दृश्यते तत्र निश्शुल्कं धान्यवितरणं प्रचलति' इत्यादयः बहवः वार्ताः श्रापालेन श्रुताः। महाराजः द्रष्टव्यः एव इति भावना तस्य मनसि तीव्रा जाता। अतः सः प्रयाणार्थं धनं सङ्ग्रहीतुम् आरब्धवान्। धनसङ्ग्रहतत्परः सः कदाचित् उपवासम् अपि आचरति।

एकवर्षानन्तरं श्रीपालः एकं वस्त्रग्रन्थिं स्कन्धे आरोप्य राजधानीं प्रति प्रस्थितवान् एव।

राजधानीं प्राप्य 'राजदर्शनं कर्तुम् इच्छामि' इति यदा भटान् उक्तवान् तदा ते उक्तवन्तः। "भवादृशं द्रष्टुं महाराजस्य समयः एव नास्ति। राजकार्यव्यग्रः सः इदानीं दर्शनं न ददाति" इति।

"अहम् एकवारं तस्य दर्शनं प्राप्य गच्छामि। तं किमपि न प्रार्थयामि" इति सदैन्यम् उक्तवान् श्रीपालः।

तथापि रक्षकभटाः अन्तः गन्तुम् अवकाशं न दत्तवन्तः। निराशः श्रीपालः ततः गन्तुम् उद्युक्तः।

तदा एतत्सर्वं परिशीलयन् कश्चित् पौरः समीपम् आगत्य श्रीपालम् उक्तवान्- "निराशः भवान् अद्यैव ग्रामं न प्रतिगच्छतु। प्रतिदिनम् अपि एतान् द्वारपालकान् एवम् एव प्रार्थयतु। कदाचित् वा ते भवतः विषये दयां प्राप्य अन्तः गन्तुम् अवकाशं कल्पयिष्यन्ति" इति।

'राजदर्शनम् अकृत्वा ग्रामगमनं व्यर्थम् एव' इति निश्चितवान् श्रीपालः।

यदा अन्धकारः व्याप्तः तदा श्रीपालस्य पुरतः अन्या समस्या आगता 'रात्रौ शयनं कुत्र?' इति। ग्रामे तु सः यस्य कस्यापि गृहस्य पुरतः शयनं कृत्वा रात्रिं यापयति स्म। यतः ग्रामे सर्वे तस्य सुपरिचिताः एव। किन्तु अत्र कस्यापि परिचयः नास्ति। रक्षकभटाः तम् उक्तवन्तः- "रात्रौ मार्गे सञ्चारः न करणीयः" इति।

तदा श्रीपालः तान् पृष्टवान्- "एवं तर्हि अहं रात्रौ कुत्र निवसामि?" इति।

"भोः, भवादृशानाम् आगन्तुकानां वसत्यर्थम् एव नगरे धर्मशालाः सन्ति।

किन्तु रात्रौ तासु अपि प्रवेशः न लभ्यते। नगरद्वारसमीपे एका धर्मशाला अस्ति। तत्र यदा कदापि प्रवेशः लभ्यते। अतः भवान् तत्रैव गच्छतु" इति उक्तवन्तः भटाः।



श्रीपालः भटैः सूचितं मार्गम् अनुसरन् धर्मशालां प्रति प्रस्थितवान्। किन्तु परिचयाभावात् सः मार्गभ्रष्टः जातः। इतस्ततः अटन् सः एकं विशालम् अङ्गणं प्राप्तवान्।

'अत्रैव किञ्चित् विश्रान्तिः स्वीकरणीया' इति चिन्तितवान् श्रीपालः। अत्रान्तरे कश्चित् तस्य समीपम् आगत्य पृष्टवान्- "कः भवान्? रात्रिसमये भवान् अत्र किं करोति?" इति।

श्रीपालः आत्मनः परिचम् आगमनकारणं च निवेदितवान्।

"महाराजदर्शनार्थम् आगतः भवान् एवम् अटन् अस्ति। भवतः एषः व्यवहारः संशयास्पदः एव। भवान् कथां कल्पयित्वा वदन् कश्चन चोरः स्यात् वा इति मम सन्देहः। प्रथमं भवान् तं वस्त्रग्रन्थिम् उद्घाट्य प्रदर्शयतु" इति उक्तवान् सः पुरुषः।

श्रीपालः वस्त्रग्रन्थिम् उद्घाट्य सर्वं प्रदर्शितवान्। तत्र धनिकधारणयोग्यानि अमूल्यानि वस्त्राणि उत्तमा पादरक्षा च आसन्।

सः पुरुषः परीक्षादृष्ट्या श्रीपालम् आपादमस्तकं दृष्टवान्।

"एतानि वस्तूनि न भवदीयानि, अपि तु चोरितानि। सत्यं खलु?" इति कठिनस्वरेण पृष्टवान् सः पुरुषः।

"न चोरितानि एतानि। एकवर्षात्मकेन सम्पादनेन एतानि क्रीतानि। सत्यं वदामि, एतनि मदीयानि एव" इति सदैन्यम् उक्तवान् श्रीपालः।

"यदि एतानि भवता एव क्रीतानि तर्हि कुतः वा न धृतानि? किमर्थं ग्रन्थौ स्थापयित्वा अटति?" इति पृष्टवान् सः पुरुषः।

"राजदर्शनसमये धारणार्थम् एतानि क्रीतानि। द्वारपालकानाम् अनुमतिप्राप्तेः



अनन्तरम् एतानि धृत्वा अन्तः गन्तव्यम् इति मम विचारः आसीत्। पूर्वम् एव धृतानि चेत् मलिनानि अभविष्यन् खलु?" इति पृष्टवान् श्रीपालः।

"राजदर्शनार्थं क्रीतानि चेत् राजभवनात् बहिः एव धृत्वा खलु अन्तः गन्तव्यम्? राजभवनं प्रविश्य वस्त्राणि धृत्वा गमनम् इत्यस्य कः अर्थः? किं द्वारक्रमणाभ्यन्तरे तानि मलिनानि भवेयुः वा?" इति आश्चर्येण पृष्टवान् सः पुरुषः।

"वस्त्रस्य सुस्थितिः थालथल्यं च अपगच्छेत् इति मम आतङ्कः" इति उत्तरितवान् श्रीपालः।

"भवान् राजदर्शनम् इच्छति चेदपि महाराजः भवतः परिचयं न प्राप्नोति। भवनः दर्शनं क्षुल्लकं गणयेत् च। एवं स्थिते राजदर्शनार्थम् एतादृशम् उत्तमं वस्त्रं किमर्थम्?" इति श्रीपालं पुनः पृष्टवान् सः पुरुषः।

श्रीपालः क्षणकालस्य मौनानन्तरम् उक्तवान्- "एतस्य देशस्य प्रभुः अवतारिपुरुषः। प्रजाहितार्थं सः अनेकानि कार्याणि कुर्वन् अस्ति। निर्धनानाम् उन्नत्यै सदा प्रयत्नशीलः सः। तादृशाय महात्मने अहं मम दारिद्र्यं प्रदर्शयितुं न इच्छामि। अतः एव एतानि वस्त्राणि सङ्गृहीतवान् अहम्" इति।

"एवं तर्हि यत् न भवितव्यम् आसीत् तदेव प्रवृत्तम्। इदनिं भवान् मम पुरतः अस्ति। अहम् एव एतस्य देशस्य प्रभुः" इति उक्तवान् सः पुरुषः।

श्रीपालः आश्चर्येण- "भवान् एव वा एतस्य देशस्य प्रभुः? एतादृशं भाग्यं मम स्यात् इति कल्पना अपि न आसीत्। मम जन्म सार्थकं जातम्। किन्तु रात्रिसमये महाराजः भवान् किमर्थम् एवम् अटति इति तु न ज्ञातम्" इति उक्तवान्।

"प्रजाः मम विषये किं वदन्ति इति ज्ञातुम् अहम् एवं रात्रिसञ्चारं करोमि। अत एव वेषान्तरं धरामि च। भवतः दर्शनेन अहम् अपि सन्तुष्टः अस्मि। श्वः राजभवनम् आगच्छतु। द्वारापालकाः प्रवेशार्थम् अनुमतिं

दास्यन्ति। भवतः दारिद्र्यं यथा अपगच्छेत् तथा उपायनानि दास्यामि भवते" इति वदन् तस्य स्कन्धे प्रीत्या हस्तं स्थापितवान् राजा।

श्रीपालः शिरः अवनमय्य भूमिं पश्यन् मौनं स्थितवान्। तदा राजा एव पुनः- "भोः, भवतः दारिद्र्यम् अहं दृष्टवान्। एतत् मम मन्त्रिणः सभासदः च पश्येयुः। अतः भवदीयानि एतानि उत्तमवस्त्राणि अहं नयामि। श्वः भवान् भवदीयेन एतेन एव वस्त्रेण एव आगच्छतु। सर्वे अस्माकं देशस्य निर्धनस्य परिस्थितिं स्वयं जानन्तु" इति उक्त्वा तं वस्त्रग्रन्थिम् उन्नीय गतवान्।

अनन्तरदिने राजा सभायां श्रीपालस्य प्रतीक्षां कृतवान्। किन्तु श्रीपालः न आगतः एव। द्वारपालकाः उक्तवन्तः यत् तादृशः कोऽपि अद्य न आगतः इति। राजा भटान् सम्प्रेष्य राजसभां प्रति श्रीपालम् आनायितवान्।

अनागमनस्य कारणं पृष्टः श्रीपालः महाराजं विनयेन उक्तवान्- "महाप्रभो! अहं तु भवतः दर्शनार्थम् एव अत्र आगतवान् आसम्। किन्तु अकस्मात् प्राप्तं भवद्दर्शनम्। तेन अहं तृप्तः। अतः पुनर्दर्शनस्य का आवश्यकता? मदीयानि उत्तमवस्त्राणि भवतः हस्ते सन्ति इति तु सत्यम्। किन्तु भवद्दर्शनानन्तरं तैः मम किं वा प्रयोजनम्? अतः तानि प्रतिप्राप्तुं न इष्टवान् अहम्" इति।

राजा तृप्त्या शिरः चालयन्- " भवति स्वार्थभावस्य लेशः अपि नास्ति। भवतः व्यवहारः अपि सरलः। भवत्कारणतः एव मम परिपालने स्थितः दोषः मया ज्ञातः। मम प्रजानां च मध्ये द्वारपालकाः भित्तिः इव आचरन्तः सन्ति। एतच्च मया इदानीं ज्ञातम्। सत्यदर्शनं कारितवन्तं भवन्तम् अतः एव सम्मानयामि" इति उक्त्वा अमूल्यानि उपायनानि दत्त्वा तं प्रेषितवान्।

एवं श्रीपालस्य दारिद्र्यम् अपगतम्। अनन्तरकाले यः कोऽपि सुलभतया राजदर्शनं प्राप्तुम् अर्हति स्म।





# अदृष्टपरीक्षा

सोमनाथपुरस्य भूस्वामिनः नाम ईश्वरस्वामी। तस्य कार्यालये लेखनकार्यार्थं लिपिकारस्य आवश्यकता आसीत्। एतां वार्तां ज्ञात्वा पञ्चदश युवकाः तत् कार्यार्थम् भूस्वामिनः समीपम् आगतवन्तः।

भूस्वामी आगतान् युवकान् उक्तवान्- "एतत्कार्यार्थम् एतावन्तः जनाः आगच्छन्ति इति मम कल्पना अपि न आसीत्। अस्तु तावत्। इदानीम् एका परीक्षा। आवरणसहिताः दश घटाः भवतां पुरतः स्थाप्यन्ते। तेषु एकस्मिन् घटे केवलम् एकं सुवर्णनाणकं स्थाप्यते। तत् नाणकं कस्मिन् घटे अस्ति इति यः ज्ञातुं समर्थः भवति तादृशाय उद्योगः।अदृष्टबलं कस्य स्यात् इति पश्यन्तु भवन्तः" इति।

कश्चन सेवकः आवरणसहितान् दश घटान् आनीय युवकानां पुरतः किञ्चिद्दूरे स्थापितवान्। तेषां पुरतः एकां जवनिकां बद्धवान् च। भूस्वामी एकस्मिन् पार्श्वे आसन्दे उपविष्टवान्।

कः कं घटम् उद्घाट्य पश्यति इति जवनिकायाः पुरतः विद्यमानाः युवकाः ज्ञातुं न शक्नुवन्ति। भूस्वामी केवलं तत् सर्वं सूक्ष्मतया अवलोकयति।

क्रमशः एकैकः एव जवनिकायाः अन्तः गत्वा कञ्चित् घटम् उद्घाट्य दृष्टवान्। किन्तु केनापि सुवर्णनाणकं न प्राप्तम्। चतुर्दश अपि युवकाः रिक्तहस्ततया एव प्रत्यागतवन्तः।

उद्योगम् अन्विष्य आगतः रामदासः नाम युवकः दूरे स्थितवान् आसीत्। घटस्य उद्घाटने इच्छाम् अप्रदर्शयन् सः मौनं स्थितवान् आसीत्।

भूस्वामी तं परीक्षादृष्ट्या पश्यन्

"भामहः"

उक्तवान्- "भोः, भवान् अपि उद्योगं प्राप्तुम् इच्छन् एव आगतवान् खलु? किमर्थं तथा मौनं स्थितवान्? अग्रे आगत्य भवान् अपि आत्मनः भाग्यपरीक्षां करोतु" इति।

तदा रामदासः उक्तवान्- "श्रीमन्, दशसु घटेषु एकस्मिन् एव सुवर्णनाणकम् अस्ति इति भवान् वदति। कदाचित् केनापि तत् सुवर्णनाणकं न प्राप्येत। द्यूते धनप्राप्तिः इव अदृष्टबलात् नाणकप्राप्तिः अपि अनिश्चिता एव। अन्यच्च अनुभवी भवान् अदृष्टपरीक्षाम् आयोज्य तद्द्वारा लिपिकारस्य नियोजनं न कुर्यात् इत्येव मम विश्वासः" इति।

तस्य वचनं श्रुत्वा भूस्वामी मन्दहासपूर्वकं पृष्टवान्- "एवं तर्हि एतां परीक्षां अहं मनोविनोदार्थम् आयोजितवान् इति वा भवतः अभिप्रायः?" इति।

"श्रीमन्, विनोदार्थम् एषा परीक्षा न स्यात्। उद्योगेच्छया आगतानां विवेचनशक्तिं चिन्तनरीतिं च परीक्षितुम् आयोजिता भवितुम् अर्हति एषा परीक्षा। मम विचारानुगुणं तेषु घटेषु कस्मिंश्चित् अपि सुवर्णनाणकं नास्ति। स्यात् चेदपि तत् मह्यं मास्तु" इति उक्तवान् रामदासः।

"घटानां परीक्षणार्थं न गन्तव्यम् इत्येव वा भवतः अभिप्रायः?" इति पुनः पृष्टवान् भूस्वामी।

"आम्। अहम् योग्यताबलात् उद्योगं प्राप्तुम् इच्छामि, न तु अदृष्टबलात्। यत्र योग्यतापरीक्षा न भवति तत्र उद्योगं न इच्छामि अहम्" इति उक्तवान् रामदासः।

तस्य वचनेन सन्तुष्टः भूस्वामी उक्तवान्- "साधु युवक, साधु! भवतः ऊहा युक्ता एव। कस्मिन् अपि घटे वस्तुतः सुवर्णनाणकं नास्ति। यः स्वयोग्यतायां विश्वसिति तं दैवम् अनुसरति। यः दैवे केवलं विश्वसिति सः जीवने साफल्यं न प्राप्नोति। भवादृशस्य शोधनार्थम् एव एषा परीक्षा आसीत्। श्वः आरभ्य भवान् कार्यार्थम् आगच्छतु" इति।

तत्र उपस्थिताः सर्वे भूस्वामिनः बुद्धिकौशलं प्रशंसितवन्तः।



# औषधप्रभावः

नवविवाहितः लक्ष्मणः पत्न्या सुभद्रया सह ग्रामात् बहिः लघुगृहे निवसति स्म। निद्रायां तौ उभौ अपि शूरौ। प्रतिदिनम् अपि सूर्योदयः जातः चेदपि तौ जागरणं न प्राप्नतः। अतः प्रातःकालीनं तयोः कृषिकार्यं सम्यक् न प्रचलति।

लक्ष्मणः स्वकीयां परिस्थितिं स्वमित्राय नन्दीशाय उक्तवान्। नन्दीशः तु- "एषः कश्चन रोगः एव। एतदर्थं भवता प्रसिद्धः वैद्यः रामनाथः द्रष्टव्यः" इति सूचितवान्।

वैद्यः रामनाथः लक्ष्मणेन उक्तं सर्वं श्रुत्वा- "एतावत् एव वा?" इति हसन् काश्चन गुलिकाः दत्तवान्। उक्तवान् च- "एताः गुलिकाः भवन्तौ उभौ अपि स्वीकुरुताम्। तेन रोगः स्वयम् एव शाम्यति। केनचित् जागरितौ इव भवन्तौ उषःकाले एव उत्तिष्ठतः" इति।

रात्रेः भोजनानन्तरं लक्ष्मणः सुभद्रा च वैद्येन दत्तां गुलिकां खादित्वा शयनं कृतवन्तौ। यदा तयोः जागरणं जातं तदा इतोऽपि प्रकाशः न व्याप्तः। 'शीघ्रम् एव अहम् उत्थितवान्' इति सन्तोषम् अनुभवन् लक्ष्मणः प्रातर्विधिं समाप्य स्वकीयं शीघ्रोत्थानं सर्वान् सूचयितुम् इच्छन् गृहात् निर्गतवान्।

मार्गे सम्मुखम् आगतः नन्दीशः पृष्टवान्- "किं भोः लक्ष्मण? दिनत्रयतः न दृष्टः एव! कुत्रापि गतवान् आसीत् वा?" इति।

लक्ष्मणः आश्चर्येण स्तब्धः! 'औषधकारणतः दिनत्रयं यावत् अहं निद्रां कृतवान्' इति वस्तुस्थितिं ज्ञातवान् सः। अतः किमपि अनुक्त्वा मौनं ततः निर्गतवान्।






# कोटीश्वरः

पूर्वं काञ्चीपुरे कश्चन वणिक् आसीत्। सः निरन्तरवाणिज्येन यथेष्टं धनं सम्पादितवान्। तस्य कोटिशः सम्पादनं दृष्ट्वा जनाः तं 'नवकुबेरः' इत्येव वदन्ति स्म।

तस्य पुत्राः पुत्र्यः चापि बहवः। सः स्वपुत्रान् तत्तद्योग्यतानुगुणं वाणिज्ये नियोजितवान्। जामातॄन् अपि स्वगृहे एव स्थापयन् वाणिज्ये नियोजितवान्। एवं स्वबान्धवानां साहाय्येन वाणिज्यम् अभिवर्धितवान्। इदानीं तस्य गृहं राजगृहायते। गृहे राजवैभवं जनसङ्ख्याधिक्यं च अस्ति। भोगं निरातङ्कम् अनुभवन् सः बान्धवैः सह सुखेन जीवति।

एषः नवकुबेरः स्वभावतः महाकृपणः। दानधर्मादिकं नाम्ना अपि न जानाति। तीर्थयात्रार्थं पुण्यसम्पादनार्थं वा सः एकां वराटिकाम् अपि न व्ययीकरोति।

एकदा एतस्य नवकुबेरस्य गृहस्य पुरतः कश्चन संन्यासी आगत्य स्थितवान्। भोजनदानार्थं प्रार्थितवान् च।

"कः भोः भवान्? भोजनं पृच्छतः भवतः कियत् औद्धत्यम्? रे चोर! गच्छतु इतः" इति नवकुबेरः तं तिरस्कारपूर्णवाण्या उक्तवान्।

"यद्यहं चोरः स्याम् तर्हि किमर्थं वा एवं भिक्षायाचनम् अकरिष्यम्? युक्तायुक्तताविचारं विना कोऽपि आक्षेपः न करणीयः" इति उक्तवान् संन्यासी।

अनन्तरं तयोः मध्ये एवम् एव किञ्चित्कालपर्यन्तं वादविवादः प्रवृत्तः।

अन्ते क्रुद्धः नवकुबेरः- "भवान् मम समयं व्यर्थीकुर्वन् अस्ति" इति तर्जयन् सेवकद्वारा तं ततः निवारितवान्।

सेवकद्वारा दूरं प्रेषितः अपि संन्यासी- "भोजनं यावत् न दीयते तावत् इतः न गच्छामि" इति वदन् गृहस्य पुरतः प्राकारात् बहिः उपविष्टवान् एव।

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"



"भवान् तत्रैव मरणं प्राप्नोतु नाम। मम गृहात् भवान् भोजनं न प्राप्स्यति। कियत्पर्यन्तं भवान् तिष्ठेत् इति अहम् अपि पश्यामि" इति उक्तवान् नवकुबेरः।

अनन्तरं दिनत्रयं यावत् सः संन्यासी निराहारं तत्रैव उपविष्टवान् आसीत्। 'कुपितः सः शापं दद्यात्' इति भापितवन्तः बान्धवाः। तथापि नवकुबेरः अचलः एव। सः मुखद्वारं पिधाय अन्यमार्गेण गमनागमनं कर्तुम् आरब्धवान्।

अत्रान्तरे संन्यासी ततः निर्गतवान् आसीत्। 'अहं विजयं साधितवान्' इति सन्तोषम् अनुभूतवान् कुबेरः। मुखद्वारम् उद्‌घाटितवान् च। किन्तु अनन्तरदिने एव पुनः सः संन्यासी तत्र उपस्थितः।

"किमर्थम् एषः संन्यासी मां वेतालः इव सदा पीडयति? सः पुनः किमर्थम् आगतः इति तं पृष्ट्वा आगच्छतु" इति उक्त्वा एकं सेवकं प्रेषितवान् नवकुबेरः।

"अहं किमपि याचितु न आगतवान्। भवतः यजमानेन सह किञ्चित् वार्तालापं कर्तुम् इच्छामि, तावदेव" इति सेवकम् उक्तवान् संन्यासी।

एतस्य प्रत्युत्तररूपेण- "इतः परं षण्मासपर्यन्तं मम समयावकाशः एव नास्ति" इति सेवकद्वारा वार्तां प्रेषितवान् नवकुबेरः। संन्यासी ततः निर्गतवान्।

षण्मासानन्तरं पुनः उपस्थितः अभवत् संन्यासी। इदानीम् अपि किमपि किमपि व्याजम् उक्त्वा तं प्रतिप्रेषितवान् नवकुबेरः। सहनाशीलः संन्यासी नवकुबेरेण सूचिते समये पुनः अपि आगच्छति। एवम् एव एकं वर्षम् अतीतम्। 'इतः परम् एतस्य पीडां सोढुं न शक्नोमि' इति चिन्तयन् नवकुबेरः संन्यासिनं स्वसमीपम् आनायितवान्।

"एकवर्षतः परिशीलनं कुर्वन् अस्मि। भवान् मायया वशीकृतः सन् पत्नी-पुत्र-बान्धवादीनां मोहजाले पतितः सन् अन्धः इव दिनानि यापयति। इतः प॰ वा विवेकं प्राप्नोतु भवान्" इति नवकुबेरम् उक्तवान् संन्यासी।

"एवं वैराग्यं बोधयितुम् एव भवान् एकस्मात् वर्षतः मां पीडयन् आसीत् वा?" इति असमाधानेन पृष्टवान् नवकुबेरः।

"मायया आवृतः भवान् एतान् सर्वान् स्वकीयान् भावयति। किन्तु तेषु कोऽपि भवन्तं स्वकीयं न भावयति। यावत् भवतः हस्ते धनं तिष्ठति तावत् एते भवन्तं सिंहासने आरोपयन्ति। यदा भवान् रिक्तहस्तः भवति तदा रक्तहीनं जलूकाः इव एते भवन्तं त्यजन्ति" इति बोधितवान् संन्यासी।

"किमर्थं वृथा जल्पति? भवतः वचनं प्रमाणैः निरूपयितुं शक्नोति वा भवान्?" इति पृष्टवान् नवकुबेरः।

संन्यासी एतत् अङ्गीकृत्य कमपि उपायं सूचयित्वा ततः निर्गतवान्।

केषाञ्चित् दिनानाम् अनन्तरं नवकुबेरः भयङ्करेण रोगेण पीडितः इव अभिनयन् शय्याम् आश्रितवान्। वेदनाम् अनुभवन् सः पत्नीम् आहूय उक्तवान्- "मम अन्तिमः क्षणः सन्निहितः। जीवने एतावत्पर्यन्तम् एकम् अपि पुण्यकार्यं न कृतवान् अहम्। एतत् मरणम् इतोऽपि एकवर्षानन्तरम् आगतं चेत् समीचीनम् अभविष्यत्" इति।

सम्भ्रान्ता नवकुबेरस्य पत्नी झटिति वैद्यम् आनायितवती। तत्क्षणे एव आगतः वैद्यः सुपरीक्ष्य अपि रोगलक्षणं न ज्ञातवान्। अतः सः 'रोगस्य कारणं सम्यक् अज्ञात्वा औषधं दत्तं चेत् दुष्परिणामः भवेत्' इति भावयन् सामान्यम् एकम् औषधं दत्त्वा ततः निर्गतवान्। नवकुबेरः तु संन्यासिनः सूचनानुसारं श्वासं निरुध्य शवः इव स्थितः आसीत्।

नवकुबेरम् आश्रित्य सामान्यतः द्विशतं



जनाः निवसन्ति। ते सर्वे तं परितः उपविश्य रोदनम् आरब्धवन्तः।

तत्समये संन्यासी तत्र आगतवान्। तस्य हस्ते एकं क्षीरपात्रम् आसीत्। संन्यासी सर्वान् मौनं स्थातुम् उक्त्वा- "वृथा रोदनं मास्तु। मम हस्ते यत् अस्ति तत् सिद्धौषधम्। एतस्य साहाय्येन मृतः अपि सजीवः भविष्यति" इति सूचितवान्।

तदा नवकुबेरस्य पत्नी इतरे च संन्यासिनः पादयोः उपरि पतित्वा- "महानुभाव! एतस्य सिद्धौषधस्य दानेन एतम् उज्जीवयतु। भवान् यत् अपेक्षते तत् दद्मः वयम्" इति प्रार्थितवन्तः।

एतत् श्रुत्वा संन्यासी उक्तवान्- "भवतां भ्रान्तिः। यस्य आयुः समाप्तं तस्य पुनः आयुःप्राप्तिः न भवति। किन्तु अन्यः स्वकीयस्य आयुषः दानं तस्मै कर्तुम् अर्हति। यः एतत् मम हस्ते स्थितं सिद्धौषधं सेवते सः गतप्राणः भवति। तदीयम् आयुः मृते प्रविशति। तेन मृतः उज्जीवितः भवति। यः स्वकीयम् आयुः दातुम् इच्छति सः एतत् सिद्धौषधं पिबतु" इति।

तदा सर्वे मौनम् आश्रितवन्तः। संन्यासी पुनः पृष्टवान्- "किम्, एतस्य महापुरुषस्य निमित्तं कोऽपि मरणं प्राप्तुं, न इच्छति वा?" इति। प्रत्युत्तरं न आगतम्।

"अहो विधिः! एषः एतेषां सर्वेषां कृते धनं व्ययीकुर्वन् जीविते पुण्यं सम्पादयितुम् एव न शक्तवान्। किन्तु येन एते सर्वे उपकृताः तस्य निमित्तं कोऽपि प्राणान् दातुं न सिद्धः। कीदृशः स्वार्थमयः प्रपञ्चः एषः!" इति उद्गारं प्रकटितवान् संन्यासी।

"इदानीम् अहं विवेकं प्राप्तवान् श्रीमन्!" इति वदन् निद्रातः इव उत्थितवान् कुबेरः। एतत् दृष्टवतां सर्वेषाम् अत्याश्चर्यम्।

नवकुबेरः तद्दिने एव परावलम्बिनः सर्वान् बन्धून् गृहात् प्रेषितवान्। वाणिज्यं समग्रतया पुत्राणां वशे अर्पितवान्। सम्पादितं धनं पुण्यकार्यार्थं व्ययीकुर्वन् शिष्टस्य आयुषः सार्थक्यं सम्पादितवान् सः।






# १६

[ व्याघ्रचर्मधारिणः उग्रदत्तं तत्सहचारिणौ रुद्रम् अरुद्रं च भयङ्करपक्षिणाम् उपरि आरोप्य ज्वालाद्वीपं प्रति नीतवन्तः। तदा आकाशमार्गे भल्लूकचर्मधारिणः तान् सम्मुखीकृतवन्तः। उग्रदत्तस्य वाहनभूतः पक्षी कस्यचित् पर्वतस्य उपरि अवतीर्णवान्। तत्र आगताः भल्लूकचर्मधारिणः उग्रदत्तं रहस्यमार्गेण स्वनायकसमीपं नेतुम् उद्युक्ताः। तदनन्तरम्.... ]

अन्तः प्रवेशानन्तरं बिलस्य मार्गः भल्लूकचर्मधारिभिः शिलापटलैः पिहितः इत्यतः तत्र सर्वत्र अन्धकारः व्याप्नोत्। उग्रदत्तः अग्रे पदं स्थापयितुम् उद्युक्तः सन् स्खलन् पतितः इव। किन्तु अत्रान्तरे तेषु एकः भल्लूकचर्मधारी हस्तसाहाय्येन तस्य पतनं निवारयन्- "अजागरूकतया पदम् अग्रे न स्थापयतु। इतः विंशतिसोपानानाम् अवतरणानन्तरम् एव समतलः मार्गः प्राप्यते। अत्र पश्यतु। मार्गः यथा दृश्येत तथा एषः मणिः प्रकाशं प्रसारयति" इति वदन् वस्त्रान्तरितं मणिं बहिः आनीतवान्। उज्ज्वलं प्रकाशमानं तं मणिम् उन्नीय गृहीतवान् च।

तम् अनुसरन्तौ अन्यौ भल्लूकचर्मधारिणौ अपि स्ववस्त्रान्तरितं मणिं बहिः आनीय हस्ते गृहीतवन्तौ। तदा तत्र सर्वत्र प्रकाशः प्रसृतः अभवत्। मणेः प्रकाशस्य साहाय्येन ते




सोपानानि अवतीर्णवन्तः।

भल्लूकचर्मधारिणां हस्ते स्थितं तं मणिं दृष्ट्वा उग्रदत्तः आश्चर्यचकितः। 'अन्धकारस्य अपसारणार्थम् एषः योग्यः उपायः। अग्नेः, काष्ठस्य, दीपस्य, सिक्थवर्तिकायाः वा अपेक्षा एव नास्ति। व्ययः अपि न्यूनः, उपयोगः अपि सुकरः'' इति आलोचितवान् सः।

''एतस्मिन् द्वीपे तैलं न लभ्यते वा? प्रकाशप्राप्त्यर्थम् एतं मणिं विना अन्यः मार्गः नास्ति वा भवताम्?'' इति कुतूहलेन पृष्टवान् उग्रदत्तः।

''तैलम्! कीदृशं तत्? तैलयुक्तस्य दीपस्य ज्वालने महान् क्लेषः न भवेत् वा? अन्यस्य दीपस्य साहाय्यम् अपि अपेक्ष्यते तत्र! ततः धूमः निर्गच्छति अपि। ये ज्वालयन्ति ते धूमकारणतः क्लेशम् अनुभवन्ति खलु? अस्माकं दासरूपेण स्थितानां भवद्देशीयानां जनानां मुखतः वयम् एतत् सर्वं श्रुतवन्तः'' इति उक्तवान् एकः भल्लूकचर्मधारी।

एतत् श्रुत्वा उग्रदत्तः स्वगतम्- ''एषः कश्चन विचित्रः द्वीपः'' इति उक्तवान्।

एतत्समये व्याघ्रचर्मधारिणां वशं गतयोः रुद्रारुद्रयोः, सुदर्शनराजस्य पुत्र्याः चन्द्रलेखायाः च स्मरणम् आगतम्। ते इदानीं कथं स्युः इति न जानाति उग्रदत्तः।

उग्रदत्तः एवम् आलोचयन् एव विंशतिं सोपानानि अवतीर्य समतलप्रदेशं प्राप्तवान्। तत्र वैशाल्यं विशेषतः न आसीत्। व्यामपरिमाणकं वैशाल्यं स्यात् तत्र। औन्नत्यं च कुत्रचित् पुरुषप्रमाणकम्, अन्यत्र कुत्रचित् ततोऽपि किञ्चित् अधिकम्। दैर्घ्यं च स्पष्टतया न ज्ञायते। एषः मार्गः कुत्र गच्छति इत्यपि न ज्ञायते।

''वयम् इदानीं कुत्र गच्छन्तः स्मः? व्याघ्रचर्मधारिणां हस्ततः मां विमोचितवन्तः, सत्यम्। मां नीत्वा भवतां नायकस्य दासं तु न कुर्वन्ति खलु? भवतां मनसि किम् अस्तीति स्पष्टं वदन्तु भोः'' इति खेदेन उक्तवान् उग्रदत्तः।

तत् श्रुत्वा एकः भल्लूकचर्मधारी

हसितवान्। अन्यः कोपं प्रदर्शयन् मौनं स्थातुं सूचितवान्।

तृतीयः उग्रदत्तं पश्यन्- "भोः, भवान् दासः करणीयः चेत् मार्गं यथा न जानीयात् तथा वस्त्रेण भवतः नेत्रद्वयं बद्ध्वा नयेम। मनुष्यान् ते व्याघ्रचर्मधारिणः एव दासान् कुर्वन्ति, न तु वयं कुर्मः। अहं चिन्तयामि भवद्देशीयाः सर्वे न विश्वासार्हाः इति। स्वजनान् एव दासान् कर्तुं तस्य व्याघ्रचर्मधारिणां नायकस्य एकपादस्य साहाय्यं प्रार्थयन्ति केचन। प्रायः भवान् भवद्देशीयं नागवर्माणं श्रुतवान् स्यात् खलु?" इति उक्तवान्।

"जानामि, सम्यक् जानामि। स च..." इति यावत् उग्रदत्तः वदन् आसीत् तावता अन्यः भल्लूकचर्मधारी पर्वोक्तं तर्जयन् उक्तवान्- "अरे, तूष्णीं तिष्ठतु वाचाल! अस्माकं नायकस्य वचनं विस्मृतवान् वा? तस्य आज्ञा का? भवतः व्यवहारः कीदृशः? बुद्धिः अस्ति वा भवतः?" इति।

एतत् श्रुत्वा सः प्रथमः मौनम् आश्रितवान्। इदानीम् अग्रे एकः भल्लूकचर्मधारी मणिं करतले स्थापयित्वा गच्छन् अस्ति। अन्यौ द्वौ उग्रदत्तस्य उभयपार्श्वे स्तः। अपरश्च उग्रदत्तस्य पृष्ठतः आगच्छन् अस्ति। एवं क्रमेण ते अग्रे गच्छन्तः आसन्।

पञ्चनिमेषं यावत् गमनेन मार्गस्य मध्ये



स्थिता पुरुषप्रमाणिका शिला दृष्टा। अग्रे यः गच्छन् आसीत् सः गमनं स्थगयन् ध्वनिसङ्केतेन इतरान् अपि स्थातुं सूचितवान्। उग्रदत्तः तु सर्वं कुतूहलेन पश्यति।

अग्रे स्थितः भल्लूकचर्मधारी शिलायां स्थिते कस्मिंश्चित् गर्ते अङ्गुलिं स्थापयित्वा नोदितवान्। तदा शिला किञ्चिदिव चलिता। अपरक्षणे शिलायाः पृष्ठभागतः "शरभss" इति ध्वनिः श्रुतः।

एतस्य उत्तररूपेण अग्रे स्थितः भल्लूकचर्मधारी "आं, भल्लूकss" इति उक्तवान्।




तदा शिला सशब्दं मार्गात् किञ्चित् अपसृत्य स्थितवती। व्याघ्रचर्म धृत्वा हस्ते खड्गम् एकं गृहीत्वा तत्र स्थितः कश्चित् अवनम्य एतान् दृष्टवान्।

'शरभः, भल्लूकः' इति एतौ अद्य सङ्केतविनिमयार्थम् उपयुज्यमानौ शब्दौ इति आलोचितवान् उग्रदत्तः। एते अपि अहोरात्रं शत्रुभयात् बाध्यमानाः सन्ति इति निश्चितवान् सः।

"एकः एव प्राप्तः वा? अन्येषां का वार्ता?" इति सः खड्गहस्तः भल्लूकचर्मधारी पृष्टवान्।

"अन्येषां वार्तां वयं न जानीमः। द्वाररक्षणकार्ये निरतस्य भवतः अप्रस्तुतविषये जिज्ञासा किमर्थम्? जानीमः चेदपि वयं न वदेम" इति उक्त्वा अग्रिमः शिलाम् इतोऽपि पार्श्वे अपसार्य अन्तः गतवान्। तम् अनुसृत्य इतरे अपि गतवन्तः। उग्रदत्तम् अपि अग्रे नीतवन्तः।

बहुदूरं यावत् ते गतवन्तः। यावत् गतं चेदपि मार्गस्य अन्त्यं न दृश्यते। सुरङ्गमार्गे तत्र तत्र उपरिष्टात् प्रकाशः आगच्छति। कुत्रचित् सुरङ्गभित्तेः अपरपार्श्वे प्रचलत् सम्भाषणं श्रूयते इव। उग्रदत्तः एतत् सर्वं सूक्ष्मदृष्ट्या परिशीलयन् गच्छन् आसीत्। "व्याघ्रचर्मधारिणां पीडां सोढुम् अशक्तः एषः भल्लूकचर्मधारिणां नायकः प्रायः अस्मिन् रहस्यप्रदेशे दिनानि यापयन् अस्ति' इति आलोचितवान् उग्रदत्तः।

अग्रे स्थितः भल्लूकचर्मधारी गमनं स्थगयित्वा करतले स्थितं कान्तिमणिम् मुष्ट्या आच्छादितवान्। हस्तम् इतस्ततः चालितवान् च। अङ्गुलीनां मध्यतः कान्तिरेखाः निस्सरन्ति स्म।

तदा महता शब्देन सह भल्लूकचर्मधारिणः पादस्य समीपे भूमिः द्विधा विभक्ता। एतेन उत्पन्नात् रन्धतः तीक्ष्णः प्रकाशः निस्सरति स्म।

"अत्र एकषष्टिः सोपानानि सन्ति। जागरूकतया अवतरतु" इति उग्रदत्तम् उक्त्वा सः व्याघ्रचर्मधारी अवतर्तुम् उद्युक्तः अभवत्।




उग्रदत्तस्य आश्चर्यस्य तु सीमा एव नास्ति। सुरङ्गमार्गे पुनः रहस्यमार्गः। ततः च सूर्यस्य इव प्रकाशः। किमिदम् अभ्दुतम्! कोऽयं विलक्षणः मायालोकः?"

उग्रदत्तः भल्लूकचर्मधारिणः च सोपानमार्गेण गच्छन्तः अन्यं समतलप्रदेशं प्राप्तवन्तः। तत्प्रदेशे भित्तिषु कान्तिप्रसारकाः मणयः योजिताः आसन्। अतः एव तत्र दिने इव प्रकाशः सदा भवति स्म।

तेषां पुरतः एव पुरुषप्रमाणकं द्वारम् आसीत्। द्वारं तु पिहितम् आसीत्।

एकः भल्लूकचर्मधारी द्वारसमीपं गत्वा मुष्टिना त्रिवारं द्वारं ताडितवान्। तदा झटिति द्वारम् उद्घाटितम्।

तत्र कश्चन दृढकायः उन्नतासने उपविष्टः आसीत्। तस्य शिरस्त्राणे भल्लूकस्य इव कर्णद्वयम् आसीत्। एषः भल्लूकचर्मधारी तस्य समीपं गत्वा कर्णे किमपि उक्तवान्।

आसनस्थः सः उग्रदत्तं पश्यन् शिरः चालयन् भल्लूकचर्मधारिणं किमपि उक्तवान्।

सः भल्लूकचर्मधारी उग्रदत्तसमीपम् आगत्य उक्वतान्- "एषः अस्माकं नायकः कन्धः भवन्तं स्वसमीपम् आह्वयति, गच्छतु" इति।

उग्रदत्तः निर्भयेन कन्धस्य पुरतः गत्वा स्थितवान्। कन्धः एतं तीक्ष्णदृष्टचा पश्यन्- "भवन्तम् अपि अविहाय अपहृताः कति?" इति पृष्टवान्।

"वयं पुरुषाः त्रयः, एका स्त्री च" इति उक्तवान् उग्रदत्तः।

"इतरे कुत्र गताः? भवान् जानाति चेत् निस्सङ्कोचं वदतु" इति उक्तवान् कन्धः।

"अहं किमपि न जानामि" इति उत्तरितवान् उग्रदत्तः। 'एवं किमर्थम् एषः पृच्छति? मत्तः एषः किं निरीक्षते?' इति न ज्ञातवान् उग्रदत्तः।

उग्रदत्तस्य मनसि प्रचलन्तं विचारं जानन् इव कन्धः मन्दहासपूर्वकम् उक्तवान्- "अहं भवतः शत्रुः न, अपि तु मित्रम् एव। व्याघ्रचर्मधारिणः ममापि शत्रवः। शत्रोः

शत्रुः मित्रम् एव खलु? अस्माभिः प्रथमं ते व्याघ्रचर्मधारिणः, तेषां नायकः एकपादः च नाशनीयाः। एतत् कर्तुम् अहम् एकाकी असमर्थः अस्मि। अत एव एवं रहस्यजीवनं यापयन् अस्मि। इदानीं भवद्देशीयेन सह समालोच्य एकम् उपायं चिन्तितवान् अस्मि। सः भवता ज्ञायते एव" इति। तं पुरुषम् प्रदर्शयितुम् अनुचरम् एकं संज्ञया सूचितवान् च।




सः अनुचरः कन्धस्य आसनस्य अधः स्थितम् एकं द्वारम् उद्घाटितवान्। तदा रुद्रः हसन् उग्रदत्तसमीपम् आगत्य- "अहो! उग्रदत्त! भवन्तं पुनः द्रष्टुं शक्नुयाम् इति न चिन्तितवान् आसम्" इति अत्यानन्देन उक्तवान्।

"अये! रुद्रः!" इति उद्गरं प्रकटयन् त्वरापूर्णस्वरेण पृष्टवान् उग्रदत्तः- "अरुद्रः कुत्र? चन्द्रलेखायाः का वार्ता?" इति।

"तौ उभौ अपि व्याघ्रचर्मधारिणां वशे एव स्तः। अहं तु एतैः भल्लूकचर्मधारिभिः रक्षितः।अत्र आगमनानन्तरम् एतस्य कन्धस्य स्नेहः अपि सम्पादितः मया। किन्तु अरुद्रस्य चन्द्रलेखायाः च रक्षणं कथम् अपि कर्तुं न शक्तवान् अहम्" इति खेदेन उक्तवान् रुद्रः।

कन्धः आसनात् उत्थाय उग्रदत्तसमीपम् आगत्य- "भवतः विषये मया रुद्रमुखात् सर्वं श्रुतम् अस्ति। इतः परम् एकपादस्य तदनुचराणां च मरणकालः सन्नितः इव। मया रुद्रेण च सम्भूय एकः उपायः चिन्तित इति उक्तं खलु? स च एवम् अस्ति- 'भवतः पितृतुल्यः उग्राक्षः तदनुचराः च अत्र आनेतव्याः, तेषां साहाय्येन एकपादस्य दुर्गस्य उपरि आक्रमणं करणीयम्' इति। भवदागमनतः अस्माकं चिन्तनस्य बलम् आगतम्" इति उक्तवान्।

"भवतः अधीने स्थिताः ते भयङ्करपक्षिणः राक्षसानां भारं निर्वोढुं शक्नुयुः वा?" इति पृष्टवान् उग्रदत्तः।

"राक्षसानां भारं वोढुं ते न शक्नुवन्ति इति तु सत्यम् एव। अतः तैः राक्षसैः नौकाद्वारा अत्र आगन्तव्यं भवति" इति उक्तवान् कन्धः।

"बद्धः अहं यदा भयङ्करपक्षिणा आनीयमानः आसं तदा सर्वत्र अवलोकितवान् अस्मि। एतं द्वीपं परितः अग्निपर्वताः सन्ति तान् परितः समुद्रः च अस्ति। पर्वतात् निर्गताः ज्वालाद्रवाः समुद्रतीरे प्रवहन्ति। अतः तीरप्रदेशः अपि ज्वालाभिः व्याप्तः अस्ति। एवं स्थिते नौकाः कथं वा तीरं प्राप्नुयुः? राक्षसाः महाबलशालिनः चेदपि अग्निम् अतिक्रम्य आगन्तुं न शक्नुयुः खलु?" इति सन्देहं प्रकटितवान् उग्रदत्तः।

एतं प्रश्नं श्रुत्वा मन्दहासं प्रकटयन्, अनुचरान् च साभिमानं पश्यन् कन्धः उक्तवान्- "मम अनुचराः तादृशान् तीरप्रदेशान् जानन्ति यत्र अग्निज्वालाः न भवन्ति। अतः तीरप्राप्तिः न क्लेशाय। क्लेशस्तु एकपादस्य दुर्गस्य आक्रमणे एव। तत्रापि विशेषक्लेशः एकपादस्य मारणे अस्ति। यतः तस्य अधीने अपूर्वा शक्तिः अस्ति" इति।

एतत् सर्वम् आश्चर्येण शण्वन् अस्ति उग्रदत्तः।

कन्धः उग्रदत्तं रहस्यमार्गेण पर्वतस्य उपरितनं भागं नीत्वा- "भोः, तत्र पश्यतु। अग्निज्वालानां मध्ये स्थितम् एव एकपादस्य दुर्गम्। यद्यपि आपाततः तत् दुर्गम् अग्निज्वालाभिः आक्रान्तम् इव दृश्यते, तथापि तत्र गन्तुं गुप्तमार्गः अस्ति एव। कथञ्चित् उपायेन दुर्गं वशीकृतं चेदपि एकपादस्य मारणं तु असाध्यम् इत्येव भाति" इति उक्तवान्।

"सः अस्मद्वशो आगतः चेत् तस्य मारणं किं कष्टकरम्? किं तत्र कष्टम्?" इति पृष्टवान् उग्रदत्तः।

"तस्मिन् अपूर्वा शक्तिः अस्ति। तस्य नेत्रे सामान्ये न। सः नेत्राभ्यां येषां रक्तं पश्यति, ये वा तस्य रक्तं पश्यन्ति, ते तत्क्षणे प्राणैः विमुक्ताः भवन्ति" इति उक्तवान् कन्धः। एतत् श्रुत्वा उग्रदत्तः आश्चर्येण स्तब्धः अभवत्।

(अनुवर्तते)






# सुचरितः

वेतालस्य निर्गमनकारणतः त्रिविक्रमस्य स्कन्धे स्थितः भारः न्यूनः जातः। एतत्कारणतः नवोत्साहं प्राप्य सः अनन्तरदिने रात्रौ पुनरपि वृक्षस्य समीपं गतवान् शाखायां लम्बमानं शवम् अधः अवतार्य स्कन्धे आरोप्य यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः महाराजम् अवदत्-"अये राजन्! शृगालानां भूतपिशाचादीनां च सञ्चारयोग्ये अस्मिन् श्मशानमार्गे, तत्रापि मध्यरात्रे भवान् यत् कष्टम् अनुभवति तत् दृष्ट्वा अहं दुःखम् अनुभवामि। महामेधाविनाम् अपि व्यवहारः कदाचित् अतीव विचित्रः भवति। तादृशेषु भवान् अपि अन्यतमः स्यात् वा इति मम सन्देहः। एते मेधाविनः प्रपञ्चं पद्मव्यूहं भावयन्ति। किन्तु अन्येषां कष्टं दृष्ट्वा ते दयार्द्राः भवन्ति। मौनं स्थातुम् अशक्ताः सन्तः अन्येषां कष्टेषु

## वेतालकथा



सहभागं स्वीकुर्वन्तः स्वयम् अपि क्लेशम् अनुभवन्ति। अत्र उदाहरणरूपेण महामेधाविनः सुचरितस्य कथां श्रावयामि, कथां शृण्वतः गच्छतः भवतः मार्गायासः परिहृतः भवेत्'' इति।

शृण्वतः गच्छत भवतः मार्गायासः परिहृतः भवेत्'' इति।

अनन्तरं वेतालेन कथा आरब्धा –

''पूर्वं चन्द्रपुरराज्यं चरितार्थः नाम राजा पालयन् आसीत्। तस्य आस्थाने सुचरितः नाम सेवकः आसीत्। सुचरितः महामेधावी। अतिकठिनाम् अपि समस्यां सः सम्यक् विविच्य परिहारोपायं सूचयति स्म। किन्तु चरितार्थराजः बहुकालपर्यन्तं सुचरितस्य प्रतिभां न लक्षितवान्। सुचरितः तु स्वयोग्यताप्रदर्शने सर्वथा अनुत्सुकः। यावत् आवश्यकं तावदेव सम्भाषणं कर्वन् सः सदा शान्ततया एव तिष्ठति स्म।

एकदा राजा चरितार्थः कस्याञ्चित् गहनालोचनायां मग्नः आसीत्। तदा सेवकः एषः सुचरितः द्राक्षारसं स्वीकृत्य तस्य समीपं गतवान्। 'राजा गहनचिन्तायां निमग्नः' इति ज्ञातवान् सुचरितः। सुचरितस्य आगमनं न ज्ञातवान् एव महाराजः।

तदा सुचरितः महाराजम् उद्दिश्य- ''प्रभो! तीव्रालोचनायां मग्नः इति भाति भवान् का सा चिन्ता? यदि अनौचित्यं न स्यात् तर्हि माम् अपि कथयतु'' इति उक्तवान्।

एतत् वचनं श्रुत्वा हसन् उक्तवान् चरितार्थः- ''महाराजः अहम् एव समस्यायाः परिहारम् अजानन् बहोः कालतः चिन्ता-क्रान्तः अस्मि। भवान् कं वा परिहारोपायं सूचयितुं शक्नुयात्? तथापि भवान् मम आन्तरङ्गिकः विश्वासार्हः सेवकः इत्यतः भवते वदामि। इदानीं देशे निशितनामकस्य महाचोरस्य पीडा पराकाष्ठतां गता अस्ति। सर्वत्र सः लुण्ठनादिकं कुर्वन् सञ्चरति। तस्य बन्धनार्थं कृताः सर्वे प्रयत्नाः विफलाः सञ्जाताः। चोरात् प्रजानां रक्षणं कर्तुम् असमर्थं मां जनाः निन्दन्तः सति। किन्तु अहं किङ्कर्तव्यतामूढः सञ्जातः अस्मि। एषा एव चिन्ता मम। यदि भवान् एव राजा अभविष्यत् तर्हि एतत्सन्दर्भे किम् अकरिष्यत्?'' इति।

सुचरितः क्षणकालम् आलोच्य उक्तवान्- "महाप्रभो! अहम् एव यदि राजा स्यां तर्हि ममस्यापरिहारम् एवम् अकरिष्यम्- अस्माकं राजधान्याः समीपे एव कांश्चन सेवकान् भूखननकार्ये न्ययोजयिष्यम्। तत्र भूमेः अन्तः प्राचीनः कश्चन शिवालयः अस्ति इति, आलये स्वर्णमयः नन्दिविग्रहः अस्ति इति च देशे वार्ताप्रसारम् अकारयिष्यम्। एतां वार्तां चोरः अपि शृणुयात् एव। सः नन्दिविग्रहं चोरयितुम् इच्छन् कर्मकरवेषेण तत्र आगच्छेत् एव। तत्रत्याः कर्मकराः सर्वे अस्मत्सैनिकाः एव। अपरिचितः कर्मकरः यदा तत्र आगच्छति तदा सः बद्धव्यः इति सैनिकान् पूर्वम् एव असूचयिष्यम्। किम् अन्यत् वक्तव्यम्? चोरः विनायासेन अस्मज्जाले पतितः अभविष्यत्" इति।

सुचरितस्य चिन्तनरीतिं दृष्ट्वा राजा चरितार्थः आश्चर्यचकितः। सः सुचरितस्य विचारानुगुणम् एव कार्यं कुर्वन् महाचोरं निशितं बद्ध्वा कारागारे स्थापितवान्।

केषाञ्चित् मासानाम् अनन्तरं महाराजस्य पुरतः अन्या समस्या आगता।

प्रतिवेशी राजा सिंहभूपतिः चन्द्रपुरस्य उपरि आक्रमणम् उद्घोषितवान्। चन्द्रपुरं न तथा समर्थः देशः। तस्य सैनिकसङ्ख्या अपि अल्पा एव। राजा मन्त्रिभिः सह समालोचनां कृतवान्। मन्त्रिभिः कोऽपि उत्तमः मार्गः न सूचितः।

'युद्धम् एव यदि प्रचलेत् तर्हि पराजयः तु निश्चितः। एतां कठिनसमस्यां कथं वा





खातस्य उभयपार्श्वे अपि अस्माकं सैन्यं तिष्ठतु। मुखद्वारप्रदेशे समर्थाः आश्विकाः सैनिकाः केचन तिष्ठन्तु। शत्रुसेना यदा खातं प्रविशति तदा अस्माकं सैनिकाः उपरिष्टात् शिलाः पातयन्तु। शिलापातेन व्रणिताः ते यदा इतस्ततः धावन्ति तदा अस्माकं सैनिकाः तेषाम् उपरि बाणप्रयोगं कुर्वन्तु। एतां विपत्तिम् अपि अतिक्रम्य ये अग्रे आगच्छन्ति तादृशान् शत्रुसैनिकान् मुखद्वारे स्थिताः अस्माकम् आश्विकाः नाशयिष्यन्ति" इति।

सुचरितेन यथा सूचितं तथैव व्यूहं रचितवान् चरितार्थः। एतेन शत्रुसेना नामावशिष्टा अभवत्। महती विपत्तिः उपायेन दूरीकृता अभवत्।

परिहरामि?' इति राजा आलोचयन् आसीत्। तदा उद्याने जलेन पुष्पसस्यानि सिञ्चतः सुचरितस्य उपरि तस्य दृष्टिः पतिता।

राजा तं स्वसमीपम् आनायितवान्। उपस्थितां समस्याम् उक्त्वा पृष्टवान् च- "इदानीं वदतु, भवान् एव राजा चेत् एतस्याः समस्यायाः परिहारं कथम् अकरिष्यत्?" इति।

क्षणकालास्य मौनानन्तरं सुचरितः उक्तवान्- "महाप्रभो! सः सिंहभूपतिः अकस्मात् आक्रमणम् अकृत्वा युद्धं यत् उद्घोषितवान् तेन अस्माकं लाभः एव जातः। अस्माकं राज्यस्य प्रवेशार्थं तेन दुर्गमे खातमार्गे एव सैन्येन सह आगन्तव्यम्।

एतेन प्रसङ्गेन सुचरितस्य मेधाशक्तेः विषये महराजस्य विश्वासः उत्पन्नः। सः सुचरितम् उक्तवान् "भोः, भवन्तम् अहं मम मुख्यसाहाय्यकत्वेन नियोक्तुम् इच्छामि। एतत् अनुमतं खलु भवतः?" इति।

तदा सुचरितः- "महाराज! स्थानप्राप्तितः दायित्वं वर्धते। दायित्ववर्धनं चिन्तनशक्तिं कुण्ठितां करोति। तदा इदानीं यथा युक्तायुक्तताविचारं करोमि तथा कर्तुं न शक्नोमि। अन्यच्च तेन भवतः अपि अपकीर्तिः एव। 'सेवकस्य मार्गदर्शनेन राजा राज्यभारं निर्वहति' इति जनाः उपहसेयुः। अतः इदानीं यथा अस्ति तथैव भवतु। अहं इदानीम् इव सेवकत्वेन एव स्थास्यामि" इति

उक्तवान्।

'सुचरितः युक्तम् एव उक्तवान्' इति आलोचितवान् राजा।

अनन्तरं पुनः कदाचित् विध्वंसकः नाम राक्षसः चन्द्रपुरसमीपस्थम् अरण्यं प्रविष्टवान्। अरण्यमार्गेण ये सञ्चरन्ति तान् खादितुम् आरब्धवान्। राजा एतां वार्तां श्रुतवान्। गूढचराणां द्वारा ज्ञातं यत् सः राक्षसः महाबलशाली इति।

राजा इदानीम् अपि सुचरितं स्वसमीपम् आहूय पृष्टवान्- ''भवान् एव राजां चेत् इदानीं किम् अकरिष्यत्?'' इति।

तदा सुचरितः- ''महाप्रभो! सः राक्षसः विध्वंसकः उपायेन एव जेतव्यः। शक्त्या यान् पराजेतुं न शक्नुमः तान् युक्त्या जेतुं शक्नुमः'' इति उक्त्वा स्वमनसि स्थितां कार्ययोजनां महाराजाय निवेदितवान्।

राजा एतत् अङ्गीकृतवान्। तद्दिने एव सः रथम् आरुह्य विध्वंसकेन आक्रान्तम् अरण्यं गतवान्।

महाराजं दृष्ट्वा विध्वंसकः उच्चैः गर्जनं कुर्वन्- ''कियद् धैर्यं भवतः! मम पुरतः आगतवान् खलु भवान्? किं नाम भवतः?'' इति पृष्टवान्।

''विध्वंसक! अहं एतस्य देशस्य राजा चरितार्थः। भवान् अरण्यमार्गेण गच्छतः सर्वान् स्वेच्छया खादति चेत् जनाः माम् असहायकं मत्वा निन्दन्ति। अतः इतः परम् अहम् एव भवतः कृते प्रतिदिनं दृढकायान् चतुरः जनान् प्रेषयिष्यामि। किन्तु भवता मार्गे गच्छन्तः प्रयाणिकाः न पीडनीयाः'' इति







उक्तवान् चरितार्थः।

विध्वंसकः एतं प्रस्तावम् अङ्गीकृतवान्। तदा राजा तं प्रार्थितवान्- ''विध्वंसक! भवता एकं साहाय्यं करणीयम्। अत्र समीपे एव कश्चन सरोवरः अस्ति। केभ्यश्चित् दिनेभ्यः पूर्वं चोराः अन्तःपुरं प्रविश्य अस्माकम् आराध्यदेवस्य सुवर्णविग्रहं चोरितवन्तः। यदा भटाः तान् अनुधावितवन्तः तदा ते चोराः विग्रहं सरोवरे क्षिप्तवन्तः। चोराः तु कारागारे स्थापिताः। किन्तु विग्रहः इदानीम् सरोवरे एव अस्ति। सरोवरे स्थितः विग्रहः भवता आनीय दातव्यः। बलशालिने भवतेः एतत् कष्टाय न भवेत् इति चिन्तयामि अहम्'' इति।

विध्वंसकः तु महता उत्साहेन- ''एतावदेव वा? क्षणाभ्यन्तरे साधयामि एतत्। कुत्र अस्ति सः सरोवरः? गच्छाव तावत् तत्र'' इति उक्तवान्।

राजा तं सरोवरसमीपं नीतवान्। सरोवरे उपरि जलं दृश्यते। किन्तु अन्तः पङ्कमयः सः। एतां वस्तुस्थितिम् अजानन् विध्वंसकः सरोवरमध्ये उत्प्लुतवान्। पङ्के निमग्नः सः उपरि आगन्तुं प्रयत्नं कुर्वन् क्रमशः अधः गच्छन् पङ्के विलीनः जातः।

राजा प्रासादम् आगत्य सुचरितस्य प्रशंसां कुर्वन् उक्तवान्- ''सुचरित! भवतः बुद्धिशक्तिः अपूर्वा। भवन्तं राजसभायां सम्मानयितुम् इच्छामि अहम्'' इति।

तदा सुचरितः विनयेन एव एतत् तिरस्कुर्वन् उक्तवान्- ''महाप्रभो! क्षाम्यतु माम्। सम्माननेन पुरस्कारदानेन च अहङ्कारः वर्धते। अहङ्कारयुक्तः जनः अधःपतनं प्राप्स्यति। अतः अहं सेवकरूपेण एव स्थातुम् इच्छामि'' इति।

एतदनन्तरं केषुचित् दिनेषु राजा गूढचराणां द्वारा श्रुतवान् यत् राजोद्योगिषु उत्कोचग्राहिता दिने दिने वर्धमाना अस्ति इति।

सः सुचरितम् आहूय एतं विषयं प्रस्तुत्य- ''यदि भवान् एव राजा अभविष्यत् तर्हि राजोद्योगिनाम् एतां दुराशां दूरीकर्तुं किम् अकरिष्यत्?'' इति पृष्टवान्।

क्षणकालस्य मौनानन्तरं सुचरितः उक्तवान्- ''महाप्रभो! 'अहं राजा भविष्यामि' इति तु स्वप्ने अपि असाध्यम्।

राजस्थानप्राप्तिः तु वंशपारम्पर्येण खड्गबलात् वा भवति। अन्यच्च तस्य स्थानस्य रक्षणार्थं स्वतश्चिन्तनशक्तिः अपेक्षिता। अहं तु राजभक्तः कश्चन पौरः। इतोऽप्यधिकं किमपि वक्तुं न शक्नोमि अहम्। क्षाम्यतु माम्'' इति।

एतत् उत्तरं श्रुत्वा राजा क्षणकालाम् आलोचनामग्नः आसीत्। अनन्तरं सः- ''भोः, सुचरित! एतत्क्षणे एव भवान् सेवकस्थानात् निष्कासितः अस्ति। देशान्तरं गत्वा जीवितुम् अर्हति भवान्'' इति उक्तवान्।

वेतालः एवं कथां समाप्य अवदत्- ''अये राजन्! परोपकारशीलः सुचरितः इतः पूर्वं सर्वदा चरितार्थस्य साहाय्यं कृतवान्। किन्तु यदा उत्कोचग्राहितायाः प्रस्तावः आगतः तदा किमर्थं साहाय्यं निराकृतवान्? किं सः गर्वी सञ्जातः? अथवा केनापि कारणान्तरेण एवं कृतवान् स्यात् वा? महाराजः किमर्थं सुचरितविषये निर्दयं व्यवहारं प्रदर्शितवान्? एतेषां सर्वेषां प्रश्नानाम् उत्तरं जानन् अपि भवान् यदि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्- ''सुचरितस्य व्यवहारे दुर्बोध्यता कापि नास्ति। 'यावत् अहं तिष्ठामि तावत् महाराजः स्वतश्चिन्तनं न करोति' इति ज्ञातवान् सुचरितः स्वतश्चिन्तनराहित्यं महाराजम् अपकरोति खलु? एतत् जानन् सुचरितः उत्कोचग्राहिताप्रस्तावे साहाय्यं निराकृतवान्। सुचरितः देशहितार्थम् एव एवं कृतवान् न तु स्वार्थसम्पादनार्थम्। सः न गर्वी। राजा अपि सुचरितस्य वचनानाम् अन्तरार्थं ज्ञातवान्। अतः एव सः सुचरितस्य निष्कासनम् अप्रियं चेदपि आचरितवान्'' इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः शवसहितम् अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।





# कृतककुञ्चिका

शिवपुरे शिवरामः नाम कश्चित् निवसति स्म। तालसमीकरणे कृतककुञ्चिकानिर्माणे च सः सिद्धहस्तः।

एकदा रामभद्रः नाम कृषिकः शिवरामसमीपम् आगत्य एकां कुञ्चिकां प्रदर्शयन्- "भोः, एतादृशीम् अपरां कुञ्चिकां निर्माय ददातु" इति उक्तवान्।

"अस्तु, श्वः प्रातः आगत्य नयतु" इति उक्तवान् शिवरामः। अनन्तरदिने यदा रामभद्रः शिवरामस्य आपणं गतवान् तदा कुञ्चिकाद्वयं दत्तवान् शिवरामः।

रामभद्रः नूतनतया निर्मितां कुञ्चिकां परीक्षदृष्ट्या पश्यन् पृष्टवान्- "एषा कुञ्चिका समीचीना स्यात् खलु?" इति।

तदा साभिमानम् उक्तवान् शिवरामः- "मम कार्यं सदा सुव्यवस्थितम् एव। मया निर्मितासु कुञ्चिकासु काऽपि अद्यावधि निष्फला न जाता" इति।

तदा रामभद्रः- "अत एव खलु अहं भवतः समीपम् आगतवान्? एषा वराकी कुञ्चिका कार्यम् एव न करोति स्म। अतः अन्यां कर्तुम् उक्तवान् अहम्" इति आत्मना दत्तां कुञ्चिकां प्रदर्शयन् उक्तवान्।



अस्माकं देशस्य वैशिष्ट्यानि–

# फतेपूर् सिक्री




आग्रानरगत: ४० कि.मी. दूरे नैर्ऋत्यदिशि पर्वतस्य उपरि अपूर्वं किञ्चन दुर्गं दृश्यते। अकबरचक्रवर्तिना निर्मितम् एतत् दुर्गं अल्पे एव काले त्यक्तं सत् निर्मानुषम् अभवत्।



अकबरचक्रवर्ती अनेकानि राज्यानि जित्वा विशालं साम्राज्यं स्थापितवान्। किन्तु सः सन्तानराहित्यात् चिन्ताक्रान्तः आसीत्। तत्समये सः पर्वते निवसतः षेक् सलीम् चिस्टी नामकस्य महिमानं श्रुतवान्। तस्य दर्शनं प्राप्य आशीर्वादं चापि प्राप्तवान् सः।

केषञ्चित् मासानाम् अनन्तरं अकबरः-चक्रवर्तिनः हैन्दवपत्नी पुत्रं प्रसूतवती। षेक् सलीं विषयकभक्त्या एषः स्वपुत्रस्यापि नाम सलीम् इत्येव निश्चितवान्। एषः एव कालान्तरे जहाङ्गीर इति प्रसिद्धिं प्राप्तवान्।






धर्मगुरोः षेक्सलीं महोदयस्य समीपे एव स्थातव्यम् इति चिन्तयन् अकबरचक्रवर्ती स्वराजधानीम् सिक्रीपर्वतस्य समीपम् आनेतुं निश्चितवान्। सिक्रीपर्वतस्य उपरि दुर्गनिर्माणकार्यम् अपि त्वरया आरब्धम्।

सिक्रीतः अकबरचक्रवर्ती १५७३ तमे संवत्सरे गुजरातप्रान्तस्य उपरि आक्रमणं कृतवान्। आरम्भे अनेके विघ्नाः आगताः। तथापि सः अन्ते विजयं संसाध्य राजधानीं प्रत्यागतवान्। एतस्य विजयस्य स्मरणार्थं तस्य दुर्गस्य नाम "फतेपूर्" (विजयनगरम्) इति निश्चितवान।






अकबरचक्रवर्ती एतस्मिन् दुर्गे पञ्चदशवर्षाणि यावत् वासं कृतवान्। बीरबलनामकेन मित्रेण सह तिष्ठन् सन्तोषेण कालं यापितवान्। सुप्रसिद्धः गायकः तानसेनः अपि एतस्य दुर्गस्य सुन्दरपरिसरेण आकृष्टः अभवत्।

किन्तु एतानि दिनानि एवम् एव न स्थितानि। फतेपूर् दुर्गे जलाभावः समुत्पन्नः। पिपासानिवारणार्थम् अपि जनाः जलं न प्राप्नुवन्ति स्म। जलसमस्यानिवारणार्थं कृताः सर्वे प्रयत्नाः विफलाः जाताः। अतः अनिवार्यतया एतत् दुर्गं त्यक्तव्यम् आपतितम्।





भूस्तरतः १७६ पादमितम् उन्नतं, वेदिकातः १३४ पादमितम् उन्नतं, भारतदेशे एव अत्युन्नतं सिंहद्वारम् इति ख्यातं "बुलाण्ड् दरवाजा" अत्रैव अस्ति। श्वेतशिलाभिः सुधाशिलाभिः च निर्मितम् एतत् सिंहद्वारं द्रष्टृणां मनः विशेषतः आकर्षति।

अत्रत्यम् अन्यत् महत्त्वपूर्णं भवनं- 'हवा महल्'। एतत् दुर्गं यदा वैभवोपेते स्थाने आसीत् तदा अत्र अन्तःपुरस्त्रियः निवसन्ति स्म। पञ्चभिः अट्टैः युक्तस्य एतस्य भवनस्य सर्वदिकृतः अपि वायोः गमनागमनार्थं व्यवस्था अस्ति।






चक्रवर्तिना तु एतत् दुर्गं त्यक्तम्। अनन्तरं किं, केवलं शिल्पसम्पत्तिनिमित्तम् एव एतत् दुर्गं रक्षणीयं खलु? एतत् तु न सुलभम्। अतः एतस्य वैभवं क्षीयमाणं जातम्। किन्तु एषु दिनेषु फतेपूर् सिक्री पुनः प्रामुख्यं प्राप्नुवत् अस्ति।



# श्वेतशशः

जपानदेशस्य समीपे समुद्रे शशानाम् एव द्वीपः अस्ति। तत्र विविधाः शशाः असङ्ख्याकाः। किन्तु तेषु श्वेतवर्णीयः शशः एकः एव आसीत्।

सः श्वेतशशः प्रतिदिनं समुद्रतीरं गच्छति। सिकतासु शयानः जपाददेशस्य दिशि निर्निमेषदृष्ट्या पश्यति। 'कथञ्चित् जपानदेशः गन्तव्यः। तत्र स्थितं चित्रवैचित्र्यं द्रष्टव्यम्' इति तस्य महती इच्छा।

एतादृश्याः इच्छायाः कारणम् अपि अस्ति एव। शशस्य स्नेहितः कश्चन मकरः अस्ति। सः तदा तदा जपानदेशतः शशद्वीपम् आगत्य सिकतासु विहरति। एतत्कारणतः तस्य मकरस्य शशस्य च मध्ये स्नेहः प्रवृद्धः।

मकरः जपानदेशस्य वैशिष्ट्यं वर्णयन् वदति- "मित्र! जपादेशस्य समुद्रतीरे अतीव अस्वच्छाः सिकताः। तत्र पादद्वययुताः मनुष्यनामकाः प्राणिनः निवसन्ति। ते पादद्वयेन यत् सञ्चरन्ति तत् तु अत्यद्भुतम्" इति।

मनुष्याणां जीवनक्रमं वर्णयन् मकरः पुनः वदति- "मानवानां प्रभुः कश्चन चक्रवर्ती अस्ति। तस्य एका पुत्री अस्ति। तस्याः केशाः अमावास्यायाः अन्धकारः इव कृष्णाः। शरीरस्य कान्तिः तु पूर्णिमायाः कौमुदी इव श्वेता। सा राजकुमारी जन्मनि एकवारं द्रष्टव्या एव" इति।

मकरेण उच्यमानम् एतत् सर्वं शृण्वतः शशस्य मनसि भावना उदेति- 'समुद्रम् अतिक्रम्य एकवारम् एतत् सर्वं द्रष्टव्यम् एव' इति। भावनायाः तीव्रतां सोढुं न शक्नोति सः।

एकदा मकरः शशम् अवदत्- "भोः राजकुमार्याः विवाहः इति वार्ता। राजकुमारीं

"जपानदेशस्य जानपदकथा"



परिणेतुम् इच्छन्तः बहवः राजकुमारा आगतवन्तः इति श्रुतम्। तेषु कमपि राजकुमारी न परिणीतवती इत्यपि श्रुतम्'' इति।

अन्यस्मिन् दिने मकरः अन्यां सद्यः-कालीनां वार्ताम् आनीतवान्- ''राजकुमारीं परिणेतुम् इच्छन्तः पञ्च सहोदराः सुदूरात् देशतः आगच्छन्तः सन्ति इति श्रुतम्। तेषु एकः तां परिणेतुम् अपि अर्हेत्'' इति। 'चक्रवर्तिनः पुत्र्याः विवाहः एतत्सन्दर्भे तु अवश्यं भविष्यति एव' इति प्रचलन्तं जनानां वार्तालापं श्रुतवान् आसीत् मकरः।

जपानदेशः द्रष्टव्यः इति आशा शशस्य मनसि अदम्या जाता। 'इदानीं तां राजकुमारीं यदि न पश्येयं तर्हि पुनः कदापि द्रष्टुं न शक्नुयाम् एव' इति व्यथा अपि तस्य।

अतः सः मकरम् अवदत्- ''भ्रातः! मां भवतः पृष्ठे आरोप्य जपानसमुद्रतीरं प्रापयतु। भवतः उपकारम् आजीवनं स्मरामि अहम्'' इति।

''यदि अहं भवन्तं जपानदेशं नीतवान् इति भवतः बान्धवाः जानीयुः तर्हि ते निश्चयेन कुपिताः भवेयुः। पुनः कदापि अहम् एतस्य तीरस्य सिकतासु शयनसुखम् अनुभोक्तुं न शक्नुयाम्'' इति सन्देहं प्रकटितवान् मकरः। अन्ते श्वेतशशस्य अनुरोधं निरोद्धुम् अशक्तः सः मकरः तं शशं पृष्ठे आरोप्य जपानतीरं प्रापितवान्। तत्तीरं गोलाकारिकाभिः लघुशिलाभिः कृष्णवर्णीयया मृत्तिकया च व्याप्तम् आसीत्।

एषः शशः यदा किञ्चिदग्रे अगच्छत् तदा कश्चन शुनकः तम् अनुधावन् आगत्य अदशत्। शुनकात् आत्मान रक्षन् सः एकं गुल्मं प्राविशत्। स च गुल्मः कस्यचित् सेतोः अधः आसीत्। समीपे एव लवणभूमिः अपि आसीत्। जीवने प्रथमवारं प्राणभयम् अनुभवन् अस्ति शशः। 'जन्मभूमिं व्यक्त्वा आगच्छता मया दोषः कृतः' इति पश्चात्तापम् अनुभवति सः।

अल्पे एव काले सेतोः उपरि गच्छतः अश्वस्य खुरपुटध्वनिः श्रुतः। शशः गुल्मात् बहिः आगत्य विचित्रं प्राणिनं मनुष्यं

निर्निमेषम् अपश्यत्।

चत्वारः मनुष्याः अश्वम् आरुह्य आगच्छन्तः आसन्। 'चक्रवर्तिनः पुत्री अस्मासु कं परिणयेत्?' इति विषये ते परस्परं चर्चयन्तः आसन्। राजकुमारीं परिणेतुं गच्छन्तः सन्ति एते इति ज्ञातवान् सः शशः। यतः मकरः पूर्वम् एव उक्तवान् आसीत् खलु पञ्च जनाः सुदूरात् देशतः आगच्छन्तः सन्ति इति?

'अहम् अपि राजकुमारीं द्रष्टुम् इच्छामि। भवद्भिः सह माम् अपि नयन्तु' इति तान् प्रार्थयत् शशः।

"एवं वा? व्रणितं भवन्तं दृष्ट्वा राजकुमारी सन्तोषेण नृत्येत्" इति उपहसितवन्तः ते।

तेषु एकः अवदत्- "भवान् लवणजले स्नानं कृत्वा सिकतासु लुण्ठनं करोति चेत् भवतः व्रणाः शाम्यन्ति" इति।

एतत् सत्यम् इति भावयन् शशः लवणजलेन स्नानम् अकरोत्। एतेन व्रणिते स्थले महती वेदना उत्पन्ना। एतां वेदनां शमयितुम् इच्छन् सः मृत्तिकासु लुण्ठनम् अकरोत्। एतेन वेदना द्विगुणिता अभवत्। कौमुदी इव प्रकाशमानं तदीयं शरीरं सर्वथा मलिनं जुगुप्साजनकं च जातम्।

"हा हन्त! एते मानवाः दुष्टाः। एतदपेक्षया शुनकानां सहवासः एव उचितः भवेत्" इति वदन् अश्रूणि स्रावयन् सेतोः




समीपे उपाविशत् शशः।

तदा सेतुमार्गेण अन्यः मनुष्यः आगतवान्। सः शय्याभारं स्कन्धे आरोपितवान् आसीत्। रुदन्तं शशं दृष्ट्वा सः-"भोः, किमर्थम् एवं रोदिति? किं प्रवृत्तम्?" इति वात्सल्येन पृष्टवान्।

'एषः सज्जनः इव भाति' इति आलोचयन् शशः प्रवृत्तं सर्वम् अवदत्। चतुर्णां पुरुषाणां दौष्ट्यम् अवर्णयत् च। सः मनुष्यः 'अहं तेषाम् अनुजः पञ्चमः राजकुमारः' इति आत्मनः परिचयम् उक्त्वा तेषां दौष्ट्यार्थं क्षमां याचितवान्।

"ते चत्वारः राजकुमारीं परिणेतुम् आगतवन्तः। अहं तेषां सेवकत्वेन आगतवान् अस्मि" इत्यपि उक्तवान् सः मानवः।

तदा शशः अपृच्छत्- "भवान् किमर्थं वा राजकुमारीं न परिणयेत्? सा जगदेकसुन्दरी इति वार्ता श्रुता मया" इति।

सः पञ्चमः राजकुमारः किमपि उत्तरम् अयच्छन् मौनं शिरश्चालयन् शशं जलेन क्षालितवान्। तस्य व्रणस्य उपरि औषधरसं लेपितवान् च।

तं पुष्पशय्यायां प्रीत्या शाययन्- "भवान् अत्रैव किञ्चित्कालं सुखनिद्रां करोतु। एतां शय्याम् अग्रजानां समीपं नीत्वा प्रत्यागत्य भवन्तं चक्रवर्तिनः पुत्र्याः समीपं नेष्यामि" इति उक्तवान् च।

यदा सः शय्यां प्रापय्य प्रत्यागतवान् तदा अपि शशः निद्रायाम् एव मग्नः आसीत्। अत्रान्तरे व्रणिते स्थले औषधप्रभावतः रोमाणि उत्पन्नानि आसन्।

पञ्चमः राजकुमारः तम् उन्नीय राजकुमार्याः समीपं गतवान्। ततः पूर्वं राजकुमारी चतुर्षु एकम् अपि राजकुमारं न इष्टवती आसीत्।

द्वारपालकाः राजकुमारीं निवेदितवन्तः- "अन्योऽपि राजकुमारः द्वारसमीपे तिष्ठति। तस्य हस्ते अपूर्वः श्वेतः शशः अपि अस्ति" इति।

"श्वेतः शशः! एतत् तु मया न श्रुतम् एव। झटिति तम् अन्तः प्रेषयन्तु" इति आज्ञापितवती राजकुमारी।

राजकुमारी राजकुमारस्य हस्तात् तं शशं स्वीकृतवती। प्रीत्या तस्य शरीरम् आमृशन्- "कियान् सुन्दरः कोमलश्च शशः एषः!" इति स्वसन्तोषं प्रकटीकृतवती। तदा शशः पञ्चमेन राजकुमारेण कृतम् उपकारं वर्णयन् अवदत्- "भवत्या एषः एव परिणेतव्यः" इति।

राजकुमारी एतत् अङ्गीकृतवती। केषुचित् एव दिनेषु चक्रवर्तिकुमारी-राजकुमारयोः विवाहं सवैभवं सम्पन्नः।

अनन्तरं शशः कदापि स्वद्वीपं न अगच्छत् एव। राजकुमार्याः सहवासे चिरकालं सुखम् अतिष्ठत् च।






रामेण निर्वर्तितः यज्ञसमारम्भः अत्यद्भुतः आसीत्। यज्ञार्थं वाल्मीकिमहर्षिः अपि स्वीयशिष्यैः सह समागत्य, स्वीयवासार्थम् ऋषिवाटिकाविभागे विशेषरूपेण निर्मितायां पर्णशालायां स्थितवान्।

तत्र सः एतादृशीं व्यवस्थां कृतवान् यत् स्वनिर्मितं रामायणं स्वीयशिष्याः यज्ञप्रदेशेषु सर्वत्र यथावकाशं गायन्तु इति। तादृशगायकेषु कुशलवौ प्रधानौ। वाल्मीकिः कुशलवौ उद्दिश्य- "भवन्तौ कौ इति यः कोऽपि पृच्छति चेत्, आवां वाल्मीकेः शिष्यौ इति वक्तव्यम्। अन्यप्रश्नानां अवकाशः एव यथा न भवेत् तथा जागरूकतया व्यवहर्तव्यम्। रामः आह्वयति चेत्, तस्य समीपं गत्वा रामायणं गायताम्। महाराजस्य तस्य रामस्य पुरतः आदरपूर्वकः व्यवहारः करणीयः" इति आदिष्टवान् आसीत्।

यमलौ कुशलवौ यज्ञप्रदेशेषु तत्र तत्र रामायणं गायतः स्म। तयोः गायनं रागतालसमन्वितं, लयबद्धं, भावयुक्तं, मृदुमधुरम्, अद्भुतं च भवति इति वार्तां रामः अपि श्रुतवान्। रामः तौ आनाय्य महत्यां सभायां गातुम् आदिष्टवान्।

प्रथमदिवसे कुशलवौ वाल्मीकिविरचितं रामायणम् आरभ्य विंशतिं सर्गान् गीतवन्तौ। तयोः गानं शृण्वन् रामः लक्ष्मणं- "एतौ बालौ अतिमधुरं गायतः। एताभ्याम् अष्टादशसहस्र-सुवर्णमुद्रिकाः दापयतु" इति उक्तवान्।

लक्ष्मणः तौ बालौ पृथक् पृथक् आनाय्य सुवर्णमुद्रिकाः दापयितुं प्रयतितवान्। किन्तु



तौ उभौ अपि "एताभिः अस्माकं किं वा प्रयोजनं भवेत्? वयं तु अरण्ये कन्दमूलफलानि भक्षयन्तः जीवामः" इति उक्तवन्तौ।

तयोः वचनानि श्रुत्वा आश्चर्यचकितः रामः- "भोः बालौ, भवद्भ्यां गीयमानम् एतत् गीतम् इतोऽपि कियत्प्रमाणकम् अस्ति? एतत् गीतं केन कविपुङ्गवेन विरचितम्?" इति अत्यासक्त्या पृष्टवान्।

"एतत् काव्यं गुरुवर्यः वाल्मीकिमहामुनिः विरचितवान्। सः अपि यज्ञार्थम् आगतवान् अस्ति। एतत् गीतम् इतोऽपि बहुदीर्घम् अस्ति। भवान् श्रोतुम् इच्छति चेत्, प्रतिदिनम् आवां गायावः" इति उक्तवन्तौ सीतापुत्रौ।

तथास्तु इति रामः स्वीयाम् इच्छां प्रकटितवान्। तदनुसारेण कुशलवौ प्रतिदिनं निश्चितसमये आगत्य रामस्य महासभायां रामायणस्य कांश्चन सर्गान् गायतः स्म। एवंरीत्या तयोः गायनं श्रुत्वा सर्वेऽपि जनाः तौ बालौ सीतायाः पुत्रौ एव इति ज्ञातवन्तः।

अन्ते रामः स्वीयान् दूतान् आहूय- "भवन्तः वाल्मीकिमहामुनेः समीपं गत्वा सीता पवित्रा अस्ति चेत् सा अत्र आगत्य तं वृत्तान्तं सयुक्तिकं निरूपयतु इति रामः इच्छति इति तं मुनिं कथयित्वा आगच्छन्तु" इति तान् प्रेषितवान्।

दूताः वाल्मीकेः समीपं गत्वा रामस्य इच्छां निवेदितवन्तः। सद्यः एव वाल्मीकिमहामुनिः दूतान्- "सीता रामस्य इच्छानुरूपं शपथं करोति इति तं वदन्तु" इति उक्त्वा तान् प्रेषितवान्।

दूताः रामस्य समीपम् आगत्य तां वार्तां कथितवन्तः।

परेद्युः प्रातः एव रामः यज्ञवाटिकां गत्वा 'सर्वेऽपि महामुनयः सभां समागच्छन्तु' इति विज्ञापितवान्। तथैव विभीषणादिराक्षसाः, वानराः, नानादेशेभ्यः आगताः जनाः इत्यादयः सर्वे अपि महासभार्थम् आहूताः।

किञ्चित्कालानन्तरम् आहूताः सर्वे आगत्य उचितासनेषु उपविष्टवन्तः। तदा वाल्मीकिमहामुनेः पश्चाद्भागतः आगच्छन्तीं सीतां दृष्ट्वा सर्वेषां तेषां हृदयानि



प्रकम्पितानि आर्द्राणि च अभवन्। अतिदीना अवनतमस्तका च सा शोकस्य एव मूर्तिरूपा इव आसीत्।

वाल्मीकिः रामं- "भोः राम, एषा सीता महाशीलवती गृहलक्ष्मीः च अस्ति। कदापि एतया धर्ममार्गः न त्यक्तः। भवान् तु लोकापवादात् भीतः एतां मम आश्रमस्य समीपे त्याजितवान्। अतः भवतः विश्वासं दृढीकर्तुम् एषा इदानीं शपथं करोति। एतौ कुशलवनामकौ द्वौ अपि भवदीयौ पुत्रौ। यदि एषा सीता यदा कदापि धर्ममार्गच्युता स्यात्, तर्हि मम तपसः फलं समूलं नश्यतु। सा सम्पूर्णरूपेण दोषरहिता इति भवान् अपि जानाति एव। भवान् केवलं लोकापवादात् भीतः इति भवतः परिस्थितिम् अहमपि जानामि" इति उक्तवान्।

रामः वाल्मीकिं नमस्कृत्य- "भोः मुनीश्वर, भवता यदुक्तं तत्सर्वं सत्यम् एव। लङ्कायां सीतायाः पावित्र्यविचारे साक्षात् अग्निदेवः एव साक्षी अभवत्। अतः एव अहम् एतां गृहम् आनीतवान्। एतौ बालौ मम पुत्रौ एव इत्यपि अहं जानामि। इदानीम् एतस्यां महासभायां सीता स्वीयं निर्दोषित्वं निरूपयिष्यति चेत् अहं तां सन्तोषेण स्वीकरिष्यामि" इति उक्तवान्।

तदा काषायवस्त्रधारिणी सीता अञ्जलिबद्धा भूत्वा भूमिं पश्यन्ती- "हे भूमातः! मम मनसि रामं विना कस्य अपि कदापि स्मरणम् अपि न अभवत्। मम एतद् वचनं सत्यम् अस्ति चेत् इदानीम् एव मह्यं सन्मार्गं प्रदर्शयतु। मनोवाक्कायैः अहं सर्वदा रामं पूजितवती अस्मि चेत्, रामं विना अन्यत् किमपि अहं न जानामि इति इदं वचनं सत्यम् अस्ति चेत् हे भूदेवि! भूमौ मह्यं मार्गं ददातु। भोः अम्ब! मातः! दयावती भवतु" इति अस्खलितवाण्या प्रार्थितवती।

सीता एवं वदन्ती एव आसीत्। अत्रान्तरे बलवन्तः नागकुमाराः दिव्यम् एकं सिंहासनं वहन्तः भूमितः उत्थाय उपरि आगतवन्तः। तस्मिन् सिंहासने आसीना भूदेवी अत्यन्तवात्सल्येन स्वीयहस्तौ प्रसार्य, सीताम् उन्नीय स्वीयसिंहासने उपवेशितवती। सद्यः एव सिंहासनम् अधः अवतरत् पातालं



प्रत्यर्पयतु। नो चेत् महयम् अपि मार्गं ददातु! कोऽत्र भोः? मम धनुर्बाणादिकम् आनयतु। एतां भूमिं छेत्स्यामि। अहम् एव मार्गम् उत्पादयामि" इति आवेशपूर्णेन स्वरेण उक्तवान्।

सर्वे उत्थाय विविधप्रकारैः रामं समाश्वासितवन्तः।

वाल्मीकिः कुशलवाभ्यां सह पर्णशालां प्रति गतवान्। तदारभ्य प्रातःपर्यन्तं सीतायाः स्मरणेन एव ते कालं यापितवन्तः। सूर्योदयः अभवत्।

पुनः निर्दिष्टसमये महासभा सिद्धा आसीत्। कुशलवौ तां सभां गत्वा उत्तररामायणं गीतवन्तौ। गीतेन सह यज्ञसमारम्भः अपि समाप्तः। यज्ञार्थं समागतान् सर्वान् अपि रामः यथाविधि सत्कृतवान्। समस्तकार्याणि समाप्य यदा रामः यज्ञप्रदेशात् अयोध्यां पुन प्रस्थितः, तदा वाल्मीकिमुनेः अनुमतिं प्राप्य कुशलवौ अपि अयोध्यां नीतवान्। अनन्तरं कुशलवौ तत्रैव स्थितवन्तौ। वाल्मीकेः आश्रमं पुनः नैव प्रतिगतवन्तौ।

अनन्तरं रामः सीतायाः सुवर्णप्रतिमां स्वपार्श्वे स्थापयन्, अश्वमेधवाजपेयादीन् अनेकमहायज्ञान् कृतवान्। सः धर्मस्य संस्थापनार्थं प्रयत्नं कुर्वन्, न्यायमार्गेण प्रजाः परिपालयन्, प्रजानाम् अपारगौरवं, प्रीत्यादिकं च सम्पादितवान्। तस्य

प्रति गतम्। भूमिः पुनः पूर्ववत् अभवत्।

एतत् दृश्यं पश्यन्तः सर्वे निश्चेष्टिताः अभवन्। किञ्चित्कालं यावत् सम्पूर्णं वातावरणं शब्दशून्यम् आसीत्। सीताम् एव पश्यतां केषाञ्चन नेत्राणि तथैव स्तब्धानि अभवन्।

अनन्तरं सर्वत्र युगपत् एव कोलाहलः सञ्जातः। वानराः उच्चैः रोदितुम् एव आरब्धवन्तः। "साधु साधु! महासाध्वि! साधु!" इति मुनयः श्लाघितवन्तः।

रामः हस्तदण्डम् आधारीकृत्य उत्थाय, किञ्चित्कालं यावत् अश्रूणि स्रावयन् "अद्यावधि अहम् एतादृशं कष्टं कदापि न अनुभूतवान्। हे भूदेवि! मम सीतां महयं

पालनसमये देशः सर्वविधसम्पत्तिभिः पूर्णः आसीत्। अकालमरणं वा ईतिबाधाः वा न आसन्। राज्यपालनविषये त्रिषु लोकेषु अपि रामराज्यम् आदर्शभूतम् अभवत्।

गच्छत्सु कालेषु कौसल्या, सुमित्रा, कैकेयी च दिवङ्गताः। रामः तासाम् उत्तरक्रियादिकं, यथाविधि कृतवान्।

पुनः किञ्चित्कालानन्तरं कैकेय्याः भ्रातुः युधाजितः सकाशात् गार्ग्यः उपायनभूतैः दशसहस्रसङ्ख्याकैः अश्वैः सह रामस्य समीपम् आगत्य- "भोः राम, भवदीयः मातुलः भवन्तम् एवं वदति- 'सिन्धुनद्याः द्वौ अपि तीरप्रदेशौ व्याप्य शोभमानः गन्धर्वदेशः अत्यन्तमनोहरः अस्ति। तत्र वर्तमानाः शैलूषवंशीयाः त्रिकोटिसङ्ख्याकाः गन्धर्वाः महाबलशालिनः सन्ति। तान् जित्वा गन्धर्वदेशः वशीकरणीयः। भवतः हितचिन्तनं कुर्वन् अहम् एवं वदामि' इति" इति युधाजितः सन्देशं रामं कथितवान्।

तं सन्देशं श्रुत्वा रामः- "समीचीनम्। एतस्य कार्यस्य साधनार्थं सेनासहितं भरतं प्रेषयामि। तस्य पुत्रौ तक्षः पुष्कलः च तेन सह गच्छताम्। भरतः गन्धर्वदेशं जित्वा, तं देशं द्विधा विभज्य, स्वीयौ द्वौ कुमारौ तयोः भागयोः पालकौ कृत्वा प्रत्यागच्छतु" इति उक्तवान्।

तेनैव प्रकारेण भरतः महत्या सेनया सह प्रस्थाय, पञ्चदश दिनानि यावत् प्रयाणं




कृत्वा केकयदेशं प्राप्तवान्। तथा तत्र युधाजितं दृष्टवान्। अनन्तरं द्वौ अपि मिलित्वा गन्धर्वान् प्रति युद्धार्थं गतवन्तौ। तस्मिन् युद्धे सर्वे गन्धर्वाः विनष्टाः। एवं जितः देशः भरतेन द्विधा विभक्तः। एकस्य भागस्य तक्षशिला इति नाम दत्त्वा तक्षं तस्य परिपालकं कृतवान्। पुष्कलावती इति नाम्ना अङ्कितः द्वितीयः भागः पुष्कलस्य अधीने दत्तः। भरतः तयोः नगरयोः पञ्च वर्षाणि यावत् उषित्वा अयोध्यां प्रत्यागतवान्।

अङ्गदः चन्द्रकेतुः च लक्ष्मणस्य पुत्रौ। इदानीं तयोः कृते राज्यव्यवस्था करणीया आसीत्। 'तयोः कृते योग्यौ देशौ कुत्र स्याताम् इति परिशीलयतु' इति रामः लक्ष्मणम्



आदिष्टवान्।

कारुपथनामकः देशः तादृशः अस्ति इति लक्ष्मणः सूचितवान्। सः देशः अङ्गदाय दातव्यः, तथा चन्द्रकान्तनामकः देशः चन्द्रकेतवे दातव्यः इति रामलक्ष्मणौ परस्परं विचार्य निर्णीतवन्तौ। अङ्गदेन सह लक्ष्मणः, चन्द्रकान्तेन सह भरतः च प्रस्थितवन्तौ। अङ्गदचन्द्रकान्तयोः कृते राज्यव्यवस्थां कृत्वा अयोध्यां प्रत्यागतवन्तौ च।

कालः व्यतीतः। एकदा यमः मुनिवेषधारी भूत्वा रामस्य राजभवनम् आगत्य, लक्ष्मणं दृष्ट्वा "भोः लक्ष्मण, अहं कस्यचित् महामुनेः दूतः अस्मि। भवान् शीघ्रं गत्वा अन्तः मम प्रवेशार्थम् अनुमतिं प्राप्य आगच्छतु" इति उक्तवान्।

सद्यः एव अन्तः गत्वा यदा लक्ष्मणः मुनेः आगमनम् उक्तवान्, तदा तम् अन्तः प्रेषयतु इति रामः लक्ष्मणं सूचितवान्।

यमः अन्तः आगत्य रामेण दत्तम् अर्घ्यपाद्यादिकं स्वीकृत्य, "भोः राम, एकान्तस्थाने मया किञ्चित् वक्तव्यम् अस्ति। आवयोः वार्तालापसमये यः कोऽपि अन्तः प्रविशति चेत् सः मृत्युदण्डं प्राप्नुयात्। एतद् भवान् अङ्गीकरोति चेत्, मम आगमनकारणं वक्ष्यामि" इति उक्तवान्।

रामः तस्य वचनम् अङ्गीकृत्य लक्ष्मणम् आहूय "लक्ष्मण, द्वारपालकम् अन्यत्र प्रेषयित्वा, भवान् एव द्वारभागे तिष्ठतु। अत्र आवयोः वार्तालापसमये यः कोऽपि अन्तः प्रविशति चेत्, तस्य मरणदण्डनं निश्चितम् एव। अवधानम् अस्तु" इति आज्ञापितवान्।

लक्ष्मणस्य निर्गमनानन्तरं यमः रामं "भोः राम, अहं कृतकवेषधारी यमः अस्मि। ब्रह्म मां प्रेषितवान्। 'भवान् रावणादिराक्षसानां संहारार्थं गृहीतावतारः विष्णुमूर्तिः अस्ति। भवतः भूलोकागमनस्य प्रयोजनं सर्वं सम्पन्नम्। भवान् यदा इच्छति, तदा अत्र प्रत्यागन्तुम् अर्हति। स्मारणं केवलम् अस्माकं कर्तव्यम्" इति उक्तवान्।

रामः विहस्य "भोः यमराज, भवतः आगमनेन मम महान् प्रमोदः जातः। अहम् अपि यस्मात् स्थानात् आगतवान् अस्मि तत्रैव

गन्तुं सिद्धः अस्मि'' इति उक्तवान्।

एवंरूपेण अन्तः यमरामयोः वार्तालापे प्रवृत्ते सति, बहिः दूर्वासाः आगत्य ''लक्ष्मण, अहम् इदानीम् एव रामं द्रष्टुम् इच्छामि'' इति उक्तवान्।

''स्वामिन्, मम अग्रजः कार्यान्तरे व्यग्रः अस्ति। कृपया किञ्चित् प्रतीक्षां करोतु। अथवा भवतः आगमनकारणं वदतु। मया शक्यते चेत्, भवतः कार्यम् अहम् एव करोमि'' इति उक्तवान् लक्ष्मणः।

दूर्वासाः कोपोद्रिक्तः भूत्वा ''इदानीम् एव मां रामस्य समीपं नयतु। नो चेत् भवतः सम्पूर्णं कुलं मम शापेन समूलं नश्यति'' इति उक्तवान्।

तस्य वचनं श्रुत्वा लक्ष्मणः ''मम एकस्य मरणेन चिन्ता नास्ति। किन्तु सम्पूणदेशस्य नाशः सर्वथा निवारणीयः'' इति आलोच्य अन्तः गत्वा रामम् आहूतवान्।

रामः उत्थाय बहिः आगत्य दूर्वासमहर्षिं नमस्कृत्य ''स्वामिन्, किम् आज्ञापयति भवान्?'' इति पृष्टवान्।

''मांम् इदानीम् एव भोजयतु'' इति उक्तवान् दूर्वासाः।

रामः सद्यः एव तस्य कृते भोजनस्य व्यवस्थां कृतवान्। दूर्वासाः भोजनं प्राप्य, तृप्तः भूत्वा ततः निर्गतवान्। अनन्तरं रामः स्वीयं शपथं स्मृत्वा यदा अतीव चिन्ताक्रान्तः तदा लक्ष्मणः अग्रजस्य समीपम् आगत्य




''अग्रज, मत्कृते चिन्ता मास्तु। मदर्थं मरणदण्डनम् आज्ञाप्य भवतः वचनरक्षणं करोतु'' इति उक्तवान्।

रामः मन्त्रिपुरोहितादीन् आनाय्य, जातं सर्वं वृत्तान्तं तेषां पुरतः कथयित्वा तेषाम् अभिप्रायं पृष्टवान्।

''राम, भवान् लक्ष्मणं परित्यजतु। परित्यागः नाम वधसदृशः एव भवति। अतः धर्मच्युतिरूपः दोषः अपि न भवति'' इति उक्तवान् गुरुः वसिष्ठः। लक्ष्मणः रामं नमस्कृत्य, स्वीयं गृहं प्रति अपि अगत्वा, साक्षात् सरयूनद्याः तीरं गत्वा, तत्र श्वासबन्धपूर्वकं योगमार्गं गृहीतवान्। तदा इन्द्रः अदृश्यरूपः विमानेन तत्र आगत्य शरीरसहितं लक्ष्मणं स्वर्गं नीतवान्।

एवंरीत्या विष्णोः चतुर्थः भागः स्वस्थानं प्राप्नोत्।

अनन्तरं रामः सभां मेलयित्वा "लक्ष्मणवत् अहम् अपि इतः निर्गमिष्यामि। भरतस्य पट्टाभिषेककृते व्यवस्थां कुर्वन्तु" इति उक्तवान्।

तस्य वचनं श्रुत्वा भरतः मतिभ्रान्तः इव अभवत्। "अग्रज, भवता पालितं राज्यं पुनः मया पालनीयं वा? एतत् कर्तुं मया न शक्यते। कुशलवयोः पट्टाभिषेकं करोतु। कुशं कोसलदेशस्य पालकं करोतु। लवः उत्तरकोसलस्य राजा भवतु। एतत् एव उचितम् इति मन्ये। अस्माकं स्वर्गगमनवार्तां शत्रुघ्नं सूचयतु" इति विज्ञापितवान् भरतः।

भरतस्य वचनानुसारेण एव सर्वं कर्तुं रामः अङ्गीकृतवान्। कुशलवयोः पट्टाभिषेकः अभवत्।

शत्रुघ्नम् आनेतुम् एकः दूतः मधुरापुरं गतवान्। शत्रुघ्नः स्वीयं राज्यं स्वीयपुत्राभ्यां सुबाहवे, शत्रुघातये च विभज्य अयोध्यां प्रत्यागतवान्।

रामः स्वर्गं गमिष्यति इति वार्तां श्रुत्वा सुग्रीवः विभीषणः च स्वीयैः परिजनैः सह अयोध्याम् आगतवन्तौ। सुग्रीवः अङ्गदस्य पट्टाभिषेकं समाप्य एव आगतवान्।

एवंरीत्या रामस्य महाप्रस्थानम् आरब्धम्। रामः लघुवस्त्रधारी भूत्वा, दर्भसहितहस्तः सन् मौनं गम्भीरं च चलितुम् आरब्धवान्। सर्वाः अन्तःपुरस्त्रियः, भरतशत्रुघ्नौ, मन्त्रिजनाः, भृत्याः, वानराः इत्यादयः भक्त्या तम् अनुसृतवन्तः।

किञ्चिद्दूरं गत्वा रामः सरयूनदीं प्रविष्टवान्। तस्यां नद्यां पादस्पर्शसमनन्तरम् एव सः ब्रह्मणः आह्वानध्वनिं श्रुतवान्। तदानीम् एव रामः भरतशत्रुघ्नौ च वैष्णवशरीराणि प्राप्तवन्तः। ब्रह्मा विष्णुं स्वागतीकृतवान्। तेन सह ये ये पूर्वं भूलोकं गतवन्तः आसन्, ते सर्वे इदानीं स्वीयस्वीयलोकान् प्रतिगतवन्तः।

(समाप्तम्)





# प्रत्युपकारः

## (८)

सुधाकरः ग्रामीणैः सह ग्रामज्येष्ठयोः समीपं गतवान्। गृहम् उद्दिश्य आगच्छतः एतावतः जनान् दृष्ट्वा जयविजयौ भीतौ।

"वयं अस्माकं ग्रामज्येष्ठौ द्रष्टुम् इच्छामः। ताभ्यां सह वार्तालापः करणीयः अस्ति" इति उक्तवान् ग्रामीणेषु अन्यतमः। अन्ये सर्वे "आम् आम्" इति उक्तवन्तः।

"एषः सुधाकरः वदति यत् अहं महाविष्णोः अंशात् जातः इति। एतस्य वचनस्य सत्यासत्यता प्रमाणीकरणीया अस्ति। एषः महाविष्णोः अवतारः एव इति ग्रामज्येष्ठौ यदि वदतः तर्हि वयं भवन्तौ यमपुरीं प्रेषयिष्यामः" इति अन्यः कश्चित् जयविजयौ उच्चैः उक्तवान्।

भीतौ जयविजयौ ग्रामज्येष्ठयोः समीपं गतवन्तौ। तौ निवेदितवन्तौ च- "भवद्भ्याम् आवयोः साहाय्यं करणीयम्। सः सुधाकरः विष्णोः अवतारः इति यदि भवन्तौ वदतः तर्हि भवतोः सम्मुखे एव आवाम् आत्महत्यां करिष्यावः" इति।

इदानीं किं करणीयम् इति अजानन्तौ तौ ग्रामज्येष्ठो क्षणकालं तूष्णीं स्थितवन्तौ। "भवन्तौ आवाम् उभयसङ्कटे पातितवन्तौ। आवां प्रियंवदया सह समालोच्य अग्रिमं पदं निर्णेष्यावः" इति उक्तवन्तौ तौ।

जयविजयौ स्वपितरौ तत्र नीतवन्तौ यत्र प्रियंवदा गृहबन्धने स्थापिता आसीत्। स च प्रकोष्ठः अन्धकारमयः आसीत्। कटे उपविश्य प्रियंवदा मौनं रोदिति स्म।

जयविजयौ यदा प्रकोष्ठस्य द्वारम् उद्घाटितवन्तौ तदा ग्रामज्येष्ठौ अन्तः प्रविष्टवन्तौ। प्रियंवदा मुखम् उन्नमय्य

आगतान् एकवारं दृष्ट्वा मुखम् अधः कृतवती।

तस्याः दयनीयां दशां दृष्ट्वा नितरां खिन्नौ ग्रामज्येष्ठौ।

"पुत्रि! प्रियंवदे! आवयोः कारणतः भवत्या अनेकानि कष्टानि सोढव्यानि अभवन्। भवत्याः एतां दुःस्थितिम् आवां द्रष्टुं न शक्नुवः। आवयोः पुत्रवियोगः भवति चेदपि चिन्ता नास्ति, भवतीं तु कथञ्चित् इतः उन्मोचयिष्यावः" इति उक्तवन्तौ ग्रामज्येष्ठौ।

प्रियंवदा प्रत्युत्तरं किमपि न दत्तवती।

ग्रामज्येष्ठौ प्रवृत्तं समग्रं निवेद्य उक्तवन्तौ- "आवयोः पुत्रौ जयविजयौ तु अविवेकिनौ, दुराग्रहशीलौ च। यथा वदतः तथा आचरतः एव। तथापि भवत्याः क्षेमार्थं, 'सुधाकरः विष्णोः अवतारभूतः एव' इति ग्रामीणान् वदिष्यावः" इति।

"एवं तर्हि मम समीपं किमर्थम् आगतवन्तौ?" इति असमाधानेन पृष्टवती प्रियंवदा।

"भवती देवता इति दर्शनमात्रेण एव ज्ञायते। भवत्याः रूपं गुणाः च अत्र प्रमाणम्। भवती शक्तिशालिनी। यदि इच्छति तर्हि क्षणमात्रेण जयविजयौ मारयितुं समर्था भवती। किन्तु आवयोः द्वारा एव तौ नाशनीयौ इति भवत्याः इच्छा। किन्तु देवि! आवयोः पुत्रौ मूर्खौ अविवेकिनौ च स्याताम्। तथापि तयोः मरणं प्रत्यक्षं द्रष्टुं न शक्नुवः। पुत्रव्यामोहः तादृशः। भवती तयोः



नाशनविचारं दूरीकरोतु, तयोः मूर्खतां निवारयतु। एतत् प्रार्थयितुम् एव आवाम् अत्र आगतवन्तौ। अस्मासु करुणां प्रदर्शयतु'' इति दीनतया प्रार्थितवन्तौ ग्रामज्येष्ठौ।

''पुत्रयोः मूर्खतां भवन्तौ एव पोषितवन्तौ। बाल्ये एव तौ सन्मार्गे नेतव्यौ आस्ताम्। इदानीं प्राप्तवयस्कयोः तयोः निग्रहणं कथं वा शक्येत?'' इति पृष्टवती प्रियंवदा।

''देवि! महिमशालिन्याः भवत्याः किं वा असाध्यम्? कर्तुम् अकर्तुम् अन्यथाकर्तुं च समर्था भवती। आवयोः पुत्रयोः प्राणाः भवत्याः अधीने सन्ति। भवती एव कमपि उपायं सूचयतु इदानीम्'' इति पुनः प्रार्थितवन्तौ तौ।

प्रियंवदा क्षणकालम् आलोच्य पृष्टवती- ''अहं कमपि उपायं न सूचयामि चेत् भवन्तौ किं कुरुतः?'' इति।

''किम् अन्यत् कर्तुं शक्यते? सुधाकरः महाविष्णोः अंशात् जातः इति ग्रामीणान् वदामः। तदनन्तरं जयविजयौ आत्महत्यया प्राणान् त्यक्ष्यतः'' इति उक्तवन्तौ ग्रामज्येष्ठौ।

''जयविजययोः प्राणत्यागम् अहम् अपि न इच्छामि। तदर्थं कश्चन उपायः करणीयः एव'' इति उक्तवती प्रियंवदा।

अनन्तरं सा स्वमनसि स्फुरितम् उपायं ग्रामज्येष्ठौ निवेदितवती। तं श्रद्धया श्रुत्वा ग्रामज्येष्ठौ तस्मात् प्रकोष्ठतः निर्गतवन्तौ।

ग्रामज्येष्ठयोः गृहस्य पुरतः ग्रामीणाः सर्वे उपविष्टाः सन्ति। सुधाकरः अपि तेषां मध्ये





अस्ति। 'इदानीं ग्रामज्येष्ठयोः प्रतिक्रिया का स्यात्?' इति कुतूहलेन निरीक्षमाणः अस्ति सः।

जनसमूहस्य समीपे एव जयविजयौ अपि स्तः। 'पित्रोः मुखात् किं वचनं निर्गच्छेत्?'' इति तयोः अपि कुतूहलम् एव। जयविजययोः हस्ते विषपात्रम् आसीत्।

ज्येष्ठः ग्रामज्येष्ठः सभाम् आन्तम् एकवारं परिशील्य उक्तवान्- ''प्रियग्रामवासिनः! अस्मान् बहुधा उपकृतवति सुधाकरे अवतारपुरुषलक्षणानि बहूनि सन्ति इति तु सत्यम् एव। किन्तु एतानि जन्मतः प्राप्तानि, उत मन्त्रबलात् सम्पादितानि इति वयं न जानीमः। इदानीं तस्य मन्त्रशक्तिः नष्टा अस्ति। अतः इदानीं सः यदि आत्मनः महिमानं निरूपयितुं शक्नुयात् तर्हि वयं तस्य विष्णोः अंशत्वम् अङ्गीकरिष्यामः। अन्यथा न'' इति।

''युक्तम् एतत्'' इति अङ्गीकारपूर्वकम् उक्तवन्तः ग्रामीणाः।

''एतदर्थम् एका परीक्षा अस्ति। सुधाकरं प्रियंवदां च वयम् अरण्यं नयेम। तौ परितः सहस्राङ्गुलदूरे वयं स्थित्वा रक्षणकार्यं करिष्यामः। यावत् शतपर्यन्तं गणना समाप्ता न भवेत् ततः पूर्वम् एव ताभ्याम् अदृश्याभ्यां भवितव्यम्। एवं साधयितुं सुधाकरः यदि शक्नोति तर्हि सः प्रियंवदां परिणेतुम् अर्हति। न शक्नोति चेत् तत्क्षणे एव तेन ग्रामः त्यक्तव्यः। तदा प्रियंवदया अस्मत्पुत्रौ जयविजयौ परिणेतव्यौ'' इति सूचितवन्तौ ग्रामज्येष्ठौ।

'एषा व्यवस्था उचिता एव' इति सर्वे उक्तवन्तः। जयविजयौ अपि एतां व्यवस्थां सन्तोषेण अङ्गीकृतवन्तौ।

''तौ परितः ग्रामीणाः जागरूकतया परिशीलयन्ति। एवं स्थिते सर्वान् वञ्चयित्वा तौ पलायनं कर्तुं न शक्नुतः। अत्यल्पे काले अदृश्यताप्राप्तिः तु सर्वथा दुःशकम्। अतः प्रियंवदा आवाम् एव परिणेष्यति'' इति जयविजययोः विचारः।

किन्तु तौ न जानीतः यत् प्रियंवदा येन सुरङ्गमार्गेण आगतवती तेनैव मार्गेण गत्वा

राजभवनं प्राप्स्यति इति।

प्रियंवदा ग्रामीणान् उक्तवती- "सुधाकरः अवतारी पुरुषः इति तु मम दृढः विश्वासः। अहं तेन सह अदृश्या भूत्वा किञ्चित्कालं गगनविहारं कृत्वा प्रत्यागच्छामि। भवताम् आतिथ्यम् अहं सम्यक् यथा स्मरेयं तथा पाथेयं किञ्चित् सज्जीकृत्य यच्छन्तु" इति।

ग्रामीणाः प्रियंवदायै सुधाकराय च उत्तमानि आहारवस्तूनि सज्जीकृत्य दत्तवन्तः।

अरण्ये प्रियंवदा यत्र सूचितवती तत्र तां सुधाकरं च नीतवन्तः ग्रामीणाः। रक्षणकार्यार्थं ते सहस्राङ्गुलदूरं गन्तुम् उद्युक्ताः।

तदा सुधाकरः तान् उक्तवान्- "भवन्तः सहस्राङ्गुलदूरं गत्वा शतपर्यन्तं सङ्ख्यां वदन्तु। तदभ्यन्तरे विष्णोः अंशात् उत्पन्नः अहम् अदृश्यः भवामि। एतदेव मम अन्तिमदर्शनम् इत्यतः मम सन्देशं श्रावयामि। प्रभुशक्तेः अपेक्षया प्रजाशक्तिः एव प्रबला। यः कोऽपि भवतां विषये अन्याय्यम् आचरतु नाम, भवद्भिः तत् न सोढव्यम्। सर्वे सम्भूय अन्याय्यं सम्मुखीकुर्वन्तु। जयविजययोः शक्तिः भवतां शक्तेः अपेक्षया न अधिका। अन्यच्च तयोः रक्षसांशम् अहं मया सह नयन् अस्मि। भवन्तः यथा इच्छन्ति तथा तान् मार्गे आनयन्तु। एतावत्पर्यन्तं यौ भवतां ग्रामस्य प्रमुखौ आस्तां तौ भवतां साहाय्यकौ भवतः। सर्वेषां शुभं भवतु" इति।

ग्रामीणाः सर्वे दूरं गतवन्तः। 'सुधाकरः प्रियंवदया सह अदृश्यः भवतु' इति ग्रामज्येष्ठयोः आशा। तौ अदृश्यौ न भवतः इति जयविजययोः निश्चयः।

ग्रामीणाः यदा दृष्टिपथात् दूरङ्गताः तदा प्रियंवदा सुधाकरेण सह वृक्षस्य मूलप्रदेशं गतवती। सुरङ्गद्वारं सुधाकराय प्रदर्शितवती च। अनन्तरं तौ सुरङ्गं प्रविश्य द्वारपटलं यथापूर्वं स्थापितवन्तौ।

(अग्रिमसञ्चिकायां समाप्ता भविष्यति।)



# प्रामाणिकता

धर्मपुरस्य भूस्वामी स्वभवनस्य रक्षणार्थम् एकं नियोक्तुम् इष्टवान्। एतां वार्तां श्रुत्वा आनन्दः मुकुन्दः च इति द्वौ युवकौ भूस्वामिनः समीपम् आगतवन्तौ। भूस्वामी तद्दिने रात्रौ आनन्दं भवनरक्षणकार्ये नियोजितवान्।

अनन्तरदिने सायङ्कालपर्यन्तम् अपि आनन्दद्वारा सस्यसेचनकार्यं कतृणोन्मूलनकार्यं च कारितवान् भूस्वामी। आनन्दः तत् कार्यं विनायासेन कृतवान्। "भवनरक्षणकार्यं लभ्यते वा न वा इति दिनचतुष्टयानन्तरं सूचयिष्यामि" इति उक्त्वा भूस्वामी आनन्दं प्रेषितवान्।

अनन्तररात्रौ भूस्वामी भवनरक्षणकार्ये मुकुन्दं नियोजितवान्। तदनन्तरदिने आनन्दम् इव मुकुन्दम् अपि उद्यानकार्ये नियोजितवान्। 'उद्यानकार्यं कुर्वन् मुकुन्दः मध्ये तन्द्रया स्खलति' इत्येतम् अंशं लक्षितवान् भूस्वामी।

भूस्वामी मुकुन्दम् आहूय उक्तवान्- "भवन्तं भवनरक्षणकार्ये नियोजितवान् अस्मि। आनन्दः तु उद्यानकार्यं विनायासं कृतवान्। एतस्य अर्थः अयं यत् आनन्दः रात्रौ भवनरक्षणकार्यं सम्यक् अकुर्वन् निद्रां कृतवान् इति। यः उक्तं कार्यं सम्यक् श्रद्धया करोति, तादृशः प्रामाणिकः एव अत्र अपेक्षितः" इति।





# उत्तराधिकारी

शङ्करपुरे सत्यनारायणः नाम कश्चन धनिकः आसीत्। सः महाकृपणः, विवादशीलः अपि। तस्य पत्नी गौराम्बा अपि पत्युः स्वभावम् एव अनुकरोति।

कोऽपि कष्टे अस्ति इति वार्ता ज्ञाता चेत् सत्यनारायणः तत्र धावति। नयवचनैः मोहयित्वा तस्मै ऋणं ददाति। अनन्तरं गणनायां वञ्चनां कुर्वन् द्विगुणितं धनं प्रतिसङ्गृह्णाति च। पत्नी गौराम्बा अपि स्थालिकाचषकादिकम् आधिरूपेण स्वीकुर्वती वृद्धया धनं सम्पादयति।

अनयोः दम्पत्योः विवाहात् पञ्चविंशति-वर्षाणाम् अनन्तरम् एकः सुन्दरः पुत्रः जातः। 'उत्तराधिकारी जातः' इति दम्पती अतीव सन्तुष्टौ।

पुत्रजननवार्तां श्रुत्वा प्रतिवेशिनः उक्तवन्तः- "बहोः कालात् अनन्तरं पुत्रः जातः। अतः नामकरणमहोत्सवः सवैभवम् आचरणीयः। ग्रामस्थेभ्यः सर्वेभ्यः विशेषभोजनं दातव्यं च" इति।

एतस्य प्रस्तावस्य विषये पतिः पत्नी च सुदीर्घं चिन्तितवन्तौ। पत्नी सूचितवती- "पुत्रस्य नामकरणदिने एव आवयोः विवाहस्य रजतोत्सवम् अपि आचरेम। तदा ये आगच्छन्ति तैः पुत्राय, आवयोः कृते च पृथक् पृथक् उपायनं दातव्यं भविष्यति। एवं द्विधा वयम् उपायनानि सङ्ग्रहीतुं शक्नुमः" इति।

सत्यनारायणः एतत् अङ्गीकृतवान्। एतदनुगुणं ग्रामस्थाः सर्वे आहूताः। भोजनकूटस्य व्यवस्था अपि कृता।

ग्रामस्थाः एतयोः दम्पत्योः स्वभावं जानीतः। दुरालोचनायाः गन्धः अपि तैः आघ्रातः। तद्दिने आगताः सर्वे - "विवाहात् पञ्चविंशतिवर्षाणाम् अनन्तरं जाताय भवतोः पुत्राय एतत् अङ्गुलीयकम्" इति

वदन्तः शिशवे उपायनं दत्तवन्तः। विवाहरजतोत्सवनिमित्तम् उपायनदानं दूरे तिष्ठतु, केनापि तस्य प्रस्तावः अपि न कृतः।

रात्रौ सत्यनारायणः गौराम्बा च उपायनस्य मूल्यं निश्चेतुम् उद्युक्तौ जातौ।

'यावान् व्ययः कृतः तावत् तु आगतं स्यात् एव' इति तयोः विचारः आसीत्।

अङ्गुलीयकानि पश्यतः सत्यनारायणस्य मनसि कोऽपि सन्देहः। सः झटिति अन्तः गत्वा शाणम् आनीय अङ्गुलीयकपरीक्षां कृतवान्। "हा हन्त! वञ्चिताः वयम्" इति उद्गारं प्रकटयन् सर्वाणि अङ्गुलीयकानि परीक्ष्य पत्नीम् उक्तवान्- "सर्वैः दत्तानि अपि सुवर्णवर्णलेपितानि कृतकानि अङ्गुलीयकानि एव। वृथा अस्माभिः भोजनव्यवस्था कृता। उपायनरूपेण कोऽपि आयः न प्राप्तः एव" इति।

"ग्रामीणाः सर्वे सम्भूय समालोचनां कृत्वा आवाम् एवं वञ्चितवन्तः। न जाने, गृहे अन्या काऽपि वञ्चना प्रवृत्ता स्यात् वा इति। तिष्ठतु, सर्वं परिशील्य आगच्छामि" इति उक्त्वा गौराम्बा त्वरया अन्तः गतवती। तत्र आधिवृत्त्या सङ्गृहीतानि स्थालिकाचषकादीनि सर्वाणि अदृश्यतां गतानि आसन्।

"हा हन्त! आकण्ठं भुक्त्वा चौर्यम् अपि कृतवन्तः एते!" इति खेदेन कोपेन च आक्रोशनं कृतवती गौराम्बा।

एवं दम्पत्योः विलापः यदा प्रचलन् आसीत् तदा प्रेङ्खायां सुप्तः शिशुः रोदनम् आरब्धवान्। शिशोः समीपं गत्वा लालयितुम् उद्युक्ता गौराम्बा शिशोः हस्तं दृष्ट्वा आश्चर्यचकिता सन्तुष्टा च। यतः शिशोः हस्ते कस्याश्चित् सुवर्णहारः दृश्यते स्म!

एतत् दृष्ट्वा सत्यनारायणः पत्नीम् उक्तवान्- "भोः, आवाभ्यां कर्तुम् अशक्यं कार्यम् आवयोः सुपुत्रः कृतवान् अस्ति। कस्याश्चित् स्त्रियः कण्ठहारम् एव वशीकृतवान्। आवयोः युक्तः उत्तराधिकारी भविष्यति एषः" इति।



# प्रकृतिवैचित्र्याणि –

उत्तरे दक्षिणे च ध्रुवप्रदेशे द्विविधा कान्तिः दृश्यते। तत्र एकस्याः नाम उत्तरज्योतिः (अरोरा बोरिलिस्) इति, अन्यस्याः नाम दक्षिणज्योतिः (अरोरा आस्ट्रालिस्) इति। सूर्यतः निर्गतानां विद्युत्कणानां ध्रुवप्रदेशस्य तले स्थितेन आयस्कान्तक्षेत्रेण सह मेलनेन एषा कान्तिः प्रसरति।



## ध्रुवप्रदेशे कान्तिविशेषः



## औष्ण्यात् रक्षणम्

आस्ट्रेलिया प्रदेशे स्थिताः कोला जातीयाः भल्लूकाः ग्रीष्मकाले मुखात् लालां स्रावयित्वा शरीरे लेपयित्वा च बाह्यात् औष्ण्यतापात् आत्मानं रक्षन्ति।

## मरुभूमौ वृष्टिः

मरुभूमौ वृष्टिः भवति चेदपि जलकणाः भूमिं न प्राप्नुवन्ति। अतः भूमिः शुष्का एव तिष्ठति। मरुभूमितः उष्णः वायुः निर्गच्छति इत्यतः मेघात् आगताः वृष्टि-बिन्दवः भूमिप्राप्तितः पूर्वम् एव बाष्परूपतां प्राप्नुवन्ति।



# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अन्यथाकर्तुम्- To alter
आधिः- Pledging
आन्तम्- To the end
आपादमस्तकम्- From top to bottom
आरक्षकः- Police
ईतिबाधा- Distress
उत्कोचग्राहिता- Corruption
कटः- Mat
कीलकम्- Stake
कृतककुञ्चिका- Counterfeit key
गुलिका- Tablet
जलूकः- Leech
जवनिका- Curtain
जामाता- Son-in-law
थालथल्यम्- Brightness
धर्मशाला- Choultry
धूमशाकटः- Train
निग्रहणम्- To control
निर्निमेषम्- Without winking
पक्षः Wing

पाथेयम्- Packed food
पृष्ठम्- Back
प्राकारः- Compound
प्रेङ्खा- Cradle
भित्तिः- Wall
मकरः- Crocodile
मुखद्वारम्- Main door
यमलौ- Twins
लाला- Saliva
लिपिकारः- Clerk
वराटिका- Cowrie
व्यामः- A measure of length
शरावः- Lid
शशः- Rabbit
शाणः- Touchstone
शैलूषः- Actor
सिक्थवर्तिका- Candle
संशयास्पदः- Doubtful
स्कन्धः– Shoulder
स्वगतम्- Speaking to oneself

* * * *

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

## विजितां शीर्षिकां डिसेम्बर्-८७ मासे प्रकटयिष्यामः।





* उपारतनं चित्रद्वय पश्यन्त। * यक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा अक्टोबर्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। * अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। * स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। * शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। * अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

## 'अगस्ट्' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - दीनोऽपि प्रसन्नः सन्तोषहेतोः।

द्वितीयचित्रम् - सम्पन्नोऽप्युदासीनःअसन्तोषहेतोः।

प्रेषकः— ब्रह्मचारी यशवन्तसिंहः, ११९, गौतमनगरम्, (गुरुकुलम्) नवदेहली-११० ०४९


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ३०.००

**डाल्टन् एजन्सीस्**, चन्दमामा बिल्डिङ्गस्, वडपळनी, मद्रास्-६०००२६

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु-

**चन्दमामा पब्लिकेषन्स्**, चन्दमामा बिल्डिङ्गस्, वडपळनी, मद्रास्-६०००२६.

**Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.**

# नूतनं युतकम्

| | |
|---|---|
| शम्भुः- किं भोः नूतनं युतकम्! कदा सीवितवान्? | Hallo! when did you get this new shirt stitched? |
| रामः- गतसप्ताहे । सीवनं कथम् अस्ति? | Just last week. How is the stitching? |
| श - सीवनं सम्यक् अस्ति। सौचिकः कः? | It's good. Who is the tailor? |
| रा - मम स्नेहितः कश्चन अस्ति। सदा तद्द्वारा एव अहं सीवनं कारयामि। सीवनं सम्यक् करोति। मूल्यम् अपि न अधिकम्। | A friend of mine. I always get my clothes stitched by him. He does a good job and his charges are also moderate. |
| श - भोः, किम् एतत्? आरम्भे अहं न लक्षितवान् एव। भवतः युतकम् अर्धबाहुकं, टेरिकाट्वस्त्रनिर्मितं च। | I say, what is it? I did not notice before! It is a terrycot half sleeve! |
| रा - मम भगिनी प्रीत्या दत्तवती एतत् वस्त्रम्। किन्तु एतत् अर्धबाहुकयुतकार्थं केवलं पर्याप्तम् आसीत्। | My sister gave me this piece. It was enough only for a half-sleeve. |
| श - इतः पूवम् एतादृशं वस्त्रं धृतवन्तं भवन्तं कदापि न दृष्टवान् एव अहम्। | I see you wearing half-sleeve only now! You had never worn before! |
| रा - एतादृशस्य धारणं निषिद्धम् इति न। तथापि मह्यं तु खादीवस्त्रधारणम् एव रोचते इति तु सत्यम् एव। | Not that I do not like to wear them, but really speaking I like to wear only handloom clothes. |
| श - किमर्थं तथा? | Why? |
| रा - मम पिता स्वातन्त्र्ययोद्धा। सः सर्वदा खादीवस्त्रम् एव धरति। स एव संस्कारः मम अपि। एतद्वस्त्रं सरलजीवनं सङ्केतयति खलु? | My father is a freedom-fighter. He always uses handloom cloth. So I also have the same attitude. It is a symbol of simple life, isn't it? |
| श - एषु दिनेषु वेमनिर्मितवस्त्रस्य एव मूल्यं न्यूनम् इति चिन्तयामि। | I think nowadays it is the mill cloth which costs less. |
| रा - तदपि सत्यम् एव। | It is also true. |